ISSN 2348-8263

# अद्वैतनिधिः

(शोधलेखानां संग्रहः)

प्रज्ञानं ब्रह्म

तत्त्वमसि



अहं ब्रह्मास्मि

अयमात्मा ब्रह्म



## अद्वैतवेदान्तविभागः

राष्ट्रियसंस्कृतसंस्थानम्, (मानितविश्वविद्यालयः)

श्रीसदाशिवपरिसरः, पुरी, ओडिशा

सत्रम्-२०१८-१९

ISSN 2348 – 8263

# अद्वैतनिधिः

(शोधलेखसंग्रहः)

२०१८-१९




**सम्पादकः**

डॉ.शम्भुनाथमहालिकः

सहायकाचार्यः (विभागाध्यक्षः)

**सहसम्पादकौ**

श्रीडिलेश्वरसाहुः, विभागाध्यापकः

श्रीबिभुदत्तमिश्रः, विभागाध्यापकः







अद्वैतवेदान्तविभागः

राष्ट्रियसंस्कृतसंस्थानम्,(मानितविश्वविद्यालयः)

श्रीसदाशिवपरिसरः,पुरी,ओडिशा




# अद्वैतनिधिः

ISSN 2348 – 8263

(शोधलेखसंगहः)


सम्पादकः – डॉ.शम्भुनाथमहालिकः (विभागाध्यक्षः)

सहसम्पादकौ – श्रीडिलेश्वरसाहुः (विभागाध्यापकः)
श्रीबिभुदत्तमिश्रः,(विभागाध्यापकः)

सम्पादनसहायकः – मनोजकुमारगिरि(शोधच्छात्रः)

प्रकाशकाः – अद्वैतवेदान्तविभागीयाचार्याः छात्राश्च, श्रीसदाशिवपरिसरः,पुरी







प्रकाशनम् – अद्वैतवेदान्तविभागः,
राष्ट्रियसंस्कृतसंस्थानम्
(मानितविश्वविद्यालयः)
श्रीसदाशिवपरिसरः,पुरी,ओडिशा

सङ्गणकसहायकः – मनोजकुमारगिरि

वर्षम् – २०१८-२०१९




# RASHTRIYA SANSKRIT SANSTHAN
(DEEMED UNIVERSITY)
## SHREE SADASHIVA CAMPUS, PURI (ODISHA)
(Under Rashtriya Sanskrit Sansthan, Established under the auspices of the Ministry of Human Resources Development, Govt. of India)

**प्रो. हरेकृष्णमहापात्र:**
Principal In-charge



Rashtriya Sanskrit Sansthan
(Deemed University)
Shree Sadashiva Campus,
Puri - 752001 (Odisha)


## शुभाशंसा

श्रीसदाशिवपरिसरस्य अद्वैतवेदान्तविभागपक्षत: अद्वैतनिधि: इति पत्रिका प्रकाश्यत इति ज्ञात्वा सुखमनुभूयते मे मन:। अद्वैतवेदान्ते तावन्निर्गुणं निराकारम् अशेषोपाधिरहितं सच्चिदानन्दस्वरूपं जगदभिन्ननिमित्तोपादानकारणम् अवाङ्मनसोगोचरमेकम् अद्वितीयं ब्रह्मैव सत्यम्। ब्रह्मणो निर्गुणत्वे सच्चिदानन्दस्वरूपे जगत्कारणत्वे अवाङ्मनोगोचरत्वे "अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययम् श्रीमद्भगवद्गीतायामुक्तमस्ति, सत्यं ज्ञानम् अनन्तं ब्रह्म, जन्माद्यस्य यत: चेत्याद्या: मानमिति भगवच्छङ्कराद्वितिनो भणन्ति। अल्पमेधसां कृते उपासनासौकर्याय परमार्थतो निर्गुणब्रह्मणोऽपि सगुणत्वकल्पना विधीयते।

एतादृशमहत्वपूर्णसिद्धान्त: आचार्यशङ्करेण प्रतिपादित: इति अस्मात् हेतो: अस्या: पत्रिकाया: उत्तरोत्तरामुन्नतिम् अद्वैतवेदान्तविभागस्य च मङ्गलं कामये।

HMahapatra

(प्रो.हरेकृष्णमहापात्र:)
प्राचार्य:

RASHTRIYA SANSKRIT SANSTHAN(DEEMED UNIVERSITY)
SHRI SADASIVA CAMPUS, PURI (ODISHA)
(Under Rashtriya Sanskrit Sansthan, Established under the auspices of the Ministry of Human Resources Development, Govt. of India)
(DEPARTMENT OF ADVAITA VEDANTA)
राष्ट्रियसंस्कृतसंस्थानम् (मानितविश्वविद्यालयः),
(मानवसंसाधनविकासमंत्रालय, भारतसर्वकाराधीनः)
श्रीसदाशिवपरिसरः,पुरी (ओड़िशा)
Rashtriya Sanskrit Sansthan
(Deemed University)
Shree Sadashiva Campus,
Puri - 752001 (Odisha)

## सम्पादकीयम्

"कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति" श्रुतिवाक्यानुसारेण ब्रह्मज्ञानेन सर्वं ज्ञा भवति अपि च अस्मात् मायामयात् संसारात् निवृत्तिः भवतीति हेतोः ब्रह्मविचारस्य प्रयोजनमस्त्येव स्थूलोऽहम्,कृशोऽहम्,वधिरोऽहमन्धोऽहमित्यादि देहधर्मादिसाकल्येन आत्मा नास्ति इ आत्मस्वरूपावसरप्रतिपादनात्मके मोक्षस्वरूपे जीवात्मनोः एकत्वदृढीकरणात्मकप्रयोजना तत्त्वमस्यादिमहावाक्यानां ज्ञानमपेक्षितमस्ति। **"सत्यं ज्ञानमनन्तं ब्रह्म"**, **"तस्माद्वा एतस्मादात्मनः आकाश सम्भूतः"** इत्यादिश्रुत्या यस्यात्मनः बोधो भवति तस्य विचारः शास्त्रेण अनेन क्रियते इत्यन्यत् प्रयोजनम् अनेन ज्ञानेन तमः प्रकाशवत् निवर्त्यनिवर्तकभावः सिद्ध्यति। आत्मविचारशास्त्रस्य मुख्यं प्रयोज शुद्धब्रह्मस्वरूपाबाह्यात्मकं मुक्तिफलमेव इति ब्रह्मविचारशास्त्रस्य बहुनि प्रयोजनानि। अतः ब्रह्मात्मैक्यज्ञाने अज्ञानस्य निवृत्तिः जायते। छात्रेषु वेदान्तशास्त्रस्य अभेदज्ञानप्रचारप्रसाराय, अज्ञानविनाशपूर्वकं परमसुखबोधाय च इयं पत्रिका "अद्वैतनिधिः" अद्वैतवेदान्तविभागपक्षतः प्रकाश्यते।

व्याकरणमूर्धन्यभूताः भवन्ति अस्माकं प्राचार्याः प्रो. हरेकृष्णमहापात्रमहोदयाः। अस्मा अनुगृहीतवतामस्माकं प्राचार्यमहोदयानां कृते हार्दं कार्तज्ञं कुसुमाञ्जलिं समर्पयामि। अस्याः पत्रिकाय सहसम्पादकानां श्रीडिलाश्वरसाहुः, बिभुदत्तमिश्रः महोदयानां च कृते आन्तरिकधन्यवादं वितनोमि। विशेष मनोजकुमारगिरिः शोधछात्रः **"अद्वैतनिधिः"** इति विभागीयपत्रिकायाः टङ्कणकार्यं कृतवन्तः।

Smahalik

(डा. शम्भुनाथमहालिकः)
विभागाध्यक्षः

# अद्वैतवेदान्तविभागस्य विशिष्टव्याख्यानमालायाः छायाचित्राणि












## अद्वैतवेदान्तविभागाचार्याः



विभागाध्यक्षः डॉ. शम्भुनाथमहालिकः





विभागाचार्यः श्रीडिलेश्वरसाहुः



विभागाचार्यः श्रीबिभुदत्तमिश्रः

# अद्वैतवेदान्तविभागस्य विशिष्टव्याख्यानमालाया: छायाचित्राणि

















सूचीपत्रम्

ISSN 2348-8263

# भक्तिज्ञानाभ्यां मोक्षः : एकं विवेचनम्

डा. शम्भुनाथमहालिकः

सहायक-अध्यापकः, वेदान्तविभागः,

सदाशिवपरिसरः, पुरी

ब्रह्मभावश्च मोक्षः। वेदान्तिनां मते ब्रह्मात्मकोऽपि जीवः अविद्यावशात् स्वस्वरूपं न जानाति। यदा जीवस्य तत्त्वज्ञानोदयः जायते, तदा अज्ञानस्य निवृत्तिः भूत्वा स्वस्वरूपस्य ब्रह्मात्मैक्यस्य प्रकाशो जायते। स एव अज्ञाननिवृत्तिरूपं, तत्त्वज्ञानोदयरूपः, ब्रह्मभावरूपः, ब्रह्मसाक्षात्काररूपः, आत्मसाक्षात्कारैव मोक्षः इत्युच्यते। ब्रह्मसूत्रेऽपि प्रतिपादितं यत् "ज्ञानेन हि प्रमाणेन अवगन्तुमिष्टं ब्रह्म" इति । ब्रह्मावगतिर्हि पुरुषार्थः, निरशेषसंसारबीजाविद्याद्य- नर्थनिबर्हणात्।

यः परंब्रह्म जानाति, स ब्रह्मैव भवति। मिथ्याज्ञाने निवृत्ते जाते सति चैतन्यस्वरूपमात्मा तथैव प्रतिभासते, यथा मलिनतायाः दूरंगते सुवर्णः, मेघरहितरात्रौ तारकाश्च। किन्तु यावत्पर्यन्तं मिथ्याज्ञानं न निवर्तते, तावत् जीवः शरीराद्यभिमानयुक्तः सन् द्रष्टा श्रोता मन्ता विज्ञाता इत्यादिरूपेण अवभासते । यथा स्फटिकमणेः स्वच्छे शुक्लेऽपि सः रक्तनीलाद्युपाधिभिः उपहितत्वात् स्वस्मिन् स्वच्छे शुक्लरूपे च नोपलभ्यते, तथैव आत्मापि दिहेन्द्रियाद्युपहितत्वात् स्वविशुद्धचैतन्ये नोपलभ्यते। जीवस्य सशरीरत्वं बन्धः, अशरीरत्वञ्च मोक्षः । स च मोक्षः ब्रह्मात्मैक्यज्ञानेन सम्भवति ।

**मोक्षसाधनम्** –

तत्त्वमस्यादिवाक्योत्थं केवलं ज्ञानम् । यथा स च मोक्षः ज्ञानैकसाध्यः न तु उपायान्तरसाध्यः । यथा च "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"[1] इति श्रुतेः अज्ञाननिवृत्तेः ज्ञानैकसाध्यत्वनियमाच्च । तच्च ज्ञानं ब्रह्मात्मैक्यगोचरम् ।

आत्मदर्शने यत् साधनानि भवन्ति तत्तु मुण्डकोपनिषदि वर्तते । यथा-

सत्येन लभ्यस्तपसा ह्येष आत्मा

सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ।

---

[1] श्वे. उ. – 3-8

ISSN 2348-8263

अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो

यं पश्यन्ति यतयः क्षीणदोषाः ॥[2]

अयमेव आत्मा सत्येन अर्थात् अनृतत्यागेन प्राप्यते। "मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः"[3] इति श्रुत्यनुसारं तपसा एव आत्मलब्धि भवति। सम्यग्ज्ञानेन ब्रह्मचर्येण एष आत्मा प्राप्यते।

पुनरप्यसाधारणं तदुपब्धिसाधनं वर्तते। यथा –

न चक्षुषा गृह्यते नापि वाचा

नान्यैर्देवैस्तपसा कर्मणा वा

ज्ञानप्रसादेन विशुद्धसत्त्वः

ततस्तु तं पश्यते निष्फलं ध्यायमानः ॥[4]

अयमेव आत्मा न चक्षुषा गृह्यते निरूपत्वात्। न वाचा अभिव्यज्यते, अवाच्यत्वात्, न इन्द्रियै विषयः भवि अविषयत्वात्। तपसः सर्वप्राप्तिसाधनत्वेऽपि न तपसा गृह्यते। अग्निहोत्रादिनिकर्माणि भवन्ति वैदिकानि। अग्निहोत्रादिकर्म प्रसिद्धमहत्त्वेनापि न गृह्यते। किं पुनस्तस्य ग्रहणे साधनमिति ? ज्ञानप्रसादेन। यदा इन्द्रियविषयसंसर्गजनित तिष्ठते तदा ज्ञान स्यात्।

तेन न ज्ञानप्रसादेन विशुद्धसत्वो विशुद्धान्तःकरणयोऽयं पुरुषः ब्रह्म द्रष्टुं समर्थो भवति। स एकाग्रेण मन ध्यायमानचिन्तयन् तमात्मानं पश्यति। मोक्षप्राप्तये ज्ञानव्यतिरेकेण अन्यो मार्ग्रो नास्तीत्यर्थः। अज्ञाननिवृत्तेः ज्ञानेनै अधिष्ठानतत्त्वसाक्षात्कारमात्रेण वा साध्यत्वम् इति नियमादपि मोक्षस्य ज्ञानैकसाध्यत्वम्। मोक्षस्य अव्यवहितकारणं ज्ञानमे "तरति शोकमात्मवित्", "ब्रह्मविदाप्नोति परम्", "आत्मा वा अरे द्रष्टव्यः" इति एवं जातीयका श्रुतिः केवलायाः विद्या पुरुषार्थहेतुत्वं श्रावयति।

---

[2]मु. उ - 3-1-5

[3]महा. शा. -250-4

[4]मु. उ. शा. भा. - 3-1-8

 ISSN 2348-8263

नैष्कर्म्यसिद्धौऽपि सुरेश्वराचार्येण मोक्षसाधनं प्रतिपादितम्। तेषां मते मोक्षः स्वतः सिद्धाः अनारभ्यश्च । मोक्षप्राप्तिः जीवस्य भवति औपचिकी । आत्मस्वरूपजीवः सदैव मुक्तः किन्तु अविद्यायाः कारणात् अमुक्तवत् प्रतिभासते । यद्यथा –

मुक्तं चातः स्वतस्तत्वं मुक्तमित्युपचर्यते ।

तदविद्याविध्वंसान्निर्वृतः शपथाभ्यहम् ।।[5]

नैष्कर्म्यसिद्धौ प्रतिपादितम् यत् वेदान्तसिद्धं तत्त्वज्ञानं अग्नीव अज्ञानं नाशयति। किन्तु कर्म अज्ञानं नाशयितुं समर्थो न भवति, अविरोधित्वात् । वेदान्तमते तु ज्ञानकर्मणः विरोधः वर्तते।

सुरेश्वराचार्येण प्रतिज्ञातार्थसंशुद्ध्यर्थं कृतम्। विमृश्य प्रतिपक्षाभ्यामर्थावधारणं निर्णयः अनेन न्यायेन ज्ञानमेव मोक्षसिद्धेः साधनम्, न तु कर्म । प्रसङ्गेऽस्मिन् पूर्वपक्षीणः वदन्ति –

अकुर्वतः क्रियाः काम्या निषिद्धास्त्यजतस्तथा

नित्यं नैमित्तिकं कर्म विधिवच्चानुतिष्ठतः ।।

यः काम्यकर्म न कृत्वा निषिद्धकर्म च त्यजति तथा विधिपूर्वकं नित्यनैमित्तिककर्मानुष्ठानं करोति सः स्वस्वरूपे स्थित्वा मोक्षं प्राप्नोति । काम्यकर्मणः अकरणे देवाधिभावं प्राप्नोति। निषिद्धकर्मणः त्यागेन जीवः नरकरूपकाधोगतिः न प्राप्नोति । नित्यानुष्ठानेन पापं न स्पृशति । अतः मोक्षप्राप्त्यर्थं कर्माणि आश्रयेत् । श्रुतिस्मृतिभिः कर्मणः विधानं श्रूयते अतः कर्मणा मोक्षसाधनं भवति इति पूर्वपक्षीणां मतम्।

सर्वे वेदाः कर्मणः प्रतिपादनं कुर्वन्ति । वेदेभ्यः यत् विपरीतं तत् तु निरर्थकमेव । प्रसङ्गेऽस्मिन् महर्षि जौमिनिना उक्तम् - "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते"[6] ।

---

[5]बृ. उ. भा. वा. 8-4-303
[6]मी.सू -1-2-1

 ISSN 2348-8263

सिद्धान्तपक्षेण पूर्वपक्षस्य मतं खण्डितम् । एतेषां मते ज्ञानस्योत्पत्तेः कर्म एव साधनं न तु पुरुषार्थसिद्धेः वादरायणव्यासदेवेन अपि ब्रह्मसूत्रे प्रतिपादितं -"सर्वापेक्षा च यज्ञादिश्रूतेरश्ववत्"[7] । "तमेतं वेदानुवचनेन", "अथ यद्य इत्याचक्षते", सर्वे वेदा यत्पदमामनन्ति इत्येवमाया च श्रुतिः कर्मणां विद्यासाधनभावं सूचयति।

अज्ञाननिवृत्तिरेव मोक्षः । यथा अज्ञानवशतः रज्जौ सर्पस्यारोपः भवति। तस्य एव अज्ञानरूपक आरोपस्य विना ज्ञानेन भवति । अतः ज्ञानेन आज्ञानस्य निवृत्तिः भवति। एवं तावत् मुक्तेः कर्मभिः सिद्धत्वात् इति निरस्तः पूर्वपक्षः ।

सम्यग्ज्ञानं प्रमाणातुत्पन्नं भवति । अतः तत्वज्ञानं बलवत् भवति। तस्मात इदं तु मिथ्याज्ञानेन न वाधितो भवति। इदं स्वतन्तमेन अनपेक्षत्वात्। तथा हि –

बलवद्धि प्रमाणोत्थसम्यग्ज्ञानं न वाध्यते ।

आकाङ्क्षते न चाऽव्यन्यद्वाधनं प्रति साधनम् ।।

मोक्षसाधनसामग्रीषु भक्तिः अन्यतमत्वं भजते । विना भक्तिं भगवतः स्वरूपं ज्ञातुं न शक्यते । नारदभक्तिसूत्रे भक्तेः संज्ञा निरू यत् "सा त्वस्मिन् परमप्रेमरूपा" इति। अर्थात् सा भक्तिः भवति भगवति इश्वरे परब्रह्मणि परमप्रेमस्वरूपा । अतः योगिना यमनियमादिरूपां मध्ये मध्ये मद्भक्तः श्रेष्ठः इति बोधयितुं भगवान् श्रीकृष्णः गीतायाम् कथयति –

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।

श्रद्धावान्भजते यो मां स मे युक्ततमो मतः ।।[8]

अर्थात् मद्गतेन मय्यासक्तेनान्तरात्मना मनसा यो मां परमेश्वरं वासुदेवं श्रद्धायुक्तः सन् भजते स योगयुक्तेषु श्रेष्ठो इति ।

अपि च ज्ञानमार्गिणाम् मार्गः अधिकः क्लेशकरः भवति । उक्तं च गीतायाम् –

क्लोशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।

अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ।[9]

---

[7]ब्र. सू. शा.भा. 3-4-26

[8]श्रीमद्भगवद्गीता 6-47

[9]श्रीमद्भगवद्गीता 12- 5

 ISSN 2348-8263

किञ्च एकान्तभक्तियोगेन यः उपासते तस्य समुद्धर्ता साक्षात् परमेश्वरः भवति। उक्तं च गीतायाम् –

ये तु सर्वाणि कर्माणि मयि संन्यस्त मत्पराः।

अनन्येनैव योगेन मा ध्यायन्त उपासति॥

तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।

भवामि नचिरात्पार्थ मय्यावेशितचेतसाम्॥[10]

भक्तेः परिभाषा बहुभिः बहुधा कृता वर्तते। तत् इह नारदभक्तिसूत्रानुसारम् उपस्थाप्यते। पाराशर्यः अर्थात् व्यासदेवानुसारं भक्तिः भवति पूजादिष्वनुरागः। अर्थात् भगवतः पूजने अनुरागः एव भक्तिः भवति। इह पूजा इत्यनेन मानसिकपूजा बाह्यपूजा उभयोः ग्रहणं वर्तते। गर्गमुनेः मतानुसारं भगवत्कथादिषु अनुरागः भक्तिः। उक्तं च गीतायाम् –

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्।

कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च।[11]

नारदमते भक्तिः भवति "तदर्पिताखिलाचारता तद्विस्मरणे परमव्यकुलता" इति। अर्थात् सर्वदा सर्वत्र यत् भगवत्स्मरणं वर्तते, किञ्च भगवन्नाम विस्मरणं या व्याकुलता वर्तते सा एव भक्ति। एतादृशः भक्तः सुदुर्लभः भवति। अतः भागवते उक्तं च –

मुक्तानामपि सिद्धानां नारायणपरायणः।

सुदुर्लभः प्रसन्नात्मा कोटिष्वपि महामुने॥[12]

वस्तुतः ज्ञानयोगेन अपि मोक्षः भवति। किन्तु भक्तियोगः ज्ञानयोगात् सुकरं भवति इति कृत्वा भगवान् श्रीकृष्णः द्वादशाध्याये भक्तियोगस्य वर्णनं कृतवान्। पुनश्च अष्टादशे अध्याये अथयति यत् परया भक्त्या माम् अभिजानाति ततश्च तत्त्वतः ज्ञात्वा मां प्राप्नोति इति। उक्तं हि – भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः।

ततो मां तत्त्वतो ज्ञात्वा विशते तदन्तरम्॥[13]

---

[10]श्रीमद्भगवद्गीता 12 - 6, 7
[11]श्रीमद्भगवद्गीता 10 - 9
[12]भागवतम् 6-14-5
[13]श्रीमद्भगवद्गीता 18 - 55

 ISSN 2348-8263

किञ्च एकान्तभक्तियोगेन यः उपासते तस्य समुद्धर्ता साक्षात् परमेश्वरः भवति। उक्तं च गीतायाम् –

ये तु सर्वाणि कर्माणि मयि संन्यस्त मत्पराः।

अनन्येनैव योगेन मा ध्यायन्त उपासति॥

तेषामहं समुद्धर्ता मृत्युसंसारसागरात्।

भवामि नचिरात्पार्थ मय्यावेशितचेतसाम्॥[10]

भक्तेः परिभाषा बहुभिः बहुधा कृता वर्तते। तत् इह नारदभक्तिसूत्रानुसारम् उपस्थाप्यते। पाराशर्यः अर्थात् व्यासदेवानुसारं भक्तिः भवति पूजादिष्वनुरागः। अर्थात् भगवतः पूजने अनुरागः एव भक्तिः भवति। इह पूजा इत्यनेन मानसिकपूजा बाह्यपूजा उभयोः ग्रहणं वर्तते। गर्गमुनेः मतानुसारं भगवत्कथादिषु अनुरागः भक्तिः। उक्तं च गीतायाम् –

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्।

कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च।[11]

नारदमते भक्तिः भवति "तदर्पिताखिलाचारता तद्विस्मरणे परमव्यकुलता" इति। अर्थात् सर्वदा सर्वत्र यत् भगवत्स्मरणं वर्तते, किञ्च भगवन्नाम विस्मरणं या व्याकुलता वर्तते सा एव भक्ति। एतादृशः भक्तः सुदुर्लभः भवति। अतः भागवते उक्तं च –

मुक्तानामपि सिद्धानां नारायणपरायणः।

सुदुर्लभः प्रसन्नात्मा कोटिष्विपि महामुने॥[12]

वस्तुतः ज्ञानयोगेन अपि मोक्षः भवति। किन्तु भक्तियोगः ज्ञानयोगात् सुकरं भवति इति कृत्वा भगवान् श्रीकृष्णः द्वादशाध्याये भक्तियोगस्य वर्णनं कृतवान्। पुनश्च अष्टादशे अध्याये अथयति यत् परया भक्त्या माम् अभिजानाति ततश्च तत्त्वतः ज्ञात्वा मां प्राप्नोति इति। उक्तं हि – भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः।

ततो मां तत्त्वतो ज्ञात्वा विशते तदन्तरम्॥[13]

---

[10]श्रीमद्भगवद्गीता 12 - 6, 7

[11]श्रीमद्भगवद्गीता 10 - 9

[12]भागवतम् 6-14-5

[13]श्रीमद्भगवद्गीता 18 - 55

 ISSN 2348-8263

स्वयं शङ्कराचार्यः अपि मोक्षसाधनसामग्रीषु भक्तेः गरीयस्त्वं प्रतिपादयति यत् –

मोक्षकारणसामग्र्यां भक्तिरेव गरियसी ।

स्वस्वरूपानुसन्धानं भक्तिरित्यभिधीयते ।

स्वात्मतत्त्वानुसन्धानं भक्तिरित्यपरे जगुः ॥[14]

विवेकचूडामणौ साधनचतुष्टयविचारे भक्तेः उपस्थापनं कृतं वर्तते । किन्तु साधनचतुष्टयेषु भक्तेः अन्तर्भावः नास्ति । अपि आचार्यः शङ्करः साधनचतुष्टयात् अतिरिच्य विशेषरूपेण भक्ति प्रस्तौति , भक्तिः मोक्षस्य कारणस्ति इति ।

सिद्धान्तत्वेन एवं वक्तुं शक्यते यत् मोक्षे भक्तिज्ञानयोः साधनता वर्तते । किन्तु ज्ञानसाधनं दुष्करं भक्तिसाधनं तु सुक इति शम् ।

## जीवत्वसंसृतिप्रतिपादनम्

श्रीडिलेश्वरस

अतिथि-अध्याप

अद्वैतवेदान्तविभागः, सदाशिवपरिसरः,

रामचन्दः वदति हे भगवन्! कार्यकारणरूपे संसारेबहुविधाः पदार्थाः वर्तन्ते। संसारेअग्निज्वालादेः उष्मतावर्त सर्वेपदार्थाः कार्यकारणयोग्याः भवन्ति। कारणंविना कार्यं नास्ति। यद्यपि सर्वेषांमतिः भिन्नाभिन्नाभवति; कथं तेषामेकत जगत्इतिकथनेन कार्यकारणं विनाजगतः स्थितिः नास्ति।

वशिष्ठः वदति हे रामचन्द! इदं जगत्उत्पत्तेः प्राक्ब्रह्मणिजीवरूपेणआसीत्। काकतालीयन्यायेन विधातुः कृते प्रतीयते तेनैव रूपेण तस्य इच्छया अव्यभिचारेण संसारस्योत्पत्तिः जायते। यद्यपि ब्रह्म एकमेवाद्वितीयं तथापिमूर्खाणांकृते

[14]विवेकचूडामणौ साधनचतुष्टयविचारे

 ISSN 2348-8263

देहोभवतिब्रह्म। अर्थात्मूर्खाः वदन्ति- ब्रह्मकिमपिनास्तिकिन्तुदेहोभवतिब्रह्मैव। ज्ञानिकृते सत्यसंकल्पसंविद्रूपस्य ब्रह्मणोअभानंनभवति। स्वप्नवत्सम्वित्नसाक्षीनाभवति। यतः तस्य भानंन स्यात्। ईश्वरस्य शक्तिः न अन्यथा भावंप्राप्नोति।

ब्रह्मभवतिस्फुरणरूपं, मायया आच्छादितञ्च। सृष्टिकाले अस्य भानं जायते तथा च प्रलयकाले सूक्ष्मत्वात्अभानसदृशंभवति। सकलवस्तूनां अर्थक्रियाकारिता अस्मात्आगच्छति। सर्वत्र जीवनरूपेणब्रह्मणः स्थितिर्जायते। यथा श्रुतिवाक्यम्- **"अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणिति।"**[१] जीवनयुक्तपुरुषस्य कृते अवस्थात्रयाणां ग्रहणं जायते। यथा आकाशः शून्यात् नभिन्नः तद्वज्जाग्रदादिकंन चेतसः भिन्नंभवति। यथा सुगन्धः कर्पूरात्नअतिरिक्तः यथा वा उष्मभावः अग्नेः नभिन्नः भवति, तद्वत् जीवब्रह्मणयोर्मध्ये नभिन्नतास्ति। एकोप्यात्मा नामरूपाभ्यां बहुप्रकारकः भवति। कार्यक्षमताजीवनंविनानसम्भवति। अयं कालः, इयं क्रिया, अयमाकाशः, अयं देशः, इदं द्रव्यम् एतत्सर्वं स्वप्नवत्आविर्भवति। वस्तुस्वस्वभावंन त्यजति। स एवप्रकृति पदवाच्यो भवति। चिदाकाशेनिराकारचेतसः यदेव स्वाभाविकस्फुरणंभवति, तदेवभवतिबाह्यपदार्थदर्शनम्। यः पदार्थः यस्मिन् काले यथा चेतसास्फुरीतोभवति, तस्य पदार्थकल्पनातादृशीभवति। इयं नियतिरपि आकाशरूपिणीभवति। अतएवआकाशादिषु तस्य भिन्नतानास्ति।

बह्निस्वस्वभावंज्वहाति। देशकालपरिवर्तनेनअपिअग्निः स्वधर्मं न त्यजति। पृथिव्यादिकं प्रत्येकं स्वकार्यस्य आकारं धारयति। यथा पृथिव्यां सम्भवः पदार्थः पार्थिवपदेनोच्यते। जलात्उत्पद्यमानः पदार्थः जलीय इतिपदेन कथ्यते। जलीयपदार्थे जलस्य अनुगमनमस्ति। तथापार्थिवपदार्थे पृथिव्याः अनुगमनमस्ति। यथा ब्रह्मजीवरूपेणसर्वशरीरेषुवर्तते। तद्वत् यस्मात् यस्य उत्पत्तिः जायते, स एवकारणात्नभिन्नः भवति। स्वप्नवत् मायासकलब्रह्म अपिआकाशवत्भवति। अर्थात्तदेवब्रह्मजगतः अधिष्ठानंभूत्वाविभिन्नरूपेणप्रतिभानंभवति मायया। यथा गङ्गादिनद्यः समुद्रेपतित्वास्वस्वरूपंन ज्ञातुंशक्नुवन्ति। यथा वा ध्वंससमये घटादयः मृत्तिकास्वरूपंविधृत्य स्वस्वरूपंप्राप्नुवन्ति। तद्वत्ब्रह्मज्ञानी ब्रह्मव्यतिरिक्तमन्यत् किमपिनजानाति। इदं शरीरंपञ्चमहाभूतैः गठितम्। शरीरेब्रह्मणः अनुगमनंवर्तते। शरीरमनित्यं ब्रह्म नित्यम्। **"चित्भवतिसम्वित् पदवाच्या।"**[२] मायाशवलितं ब्रह्मसंसारं सृजति। प्रलयकाले स्वस्मिन् अन्तर्भावयति। **"यद्यपि चन्द्रसूर्यादयः स्वप्रभां विस्तारयन्ति। तत्र सूर्यस्य प्रभाप्रखराभवतिएवं चन्द्रस्य प्रभाशितलता आवहति।"**[३] यथा सूर्यस्य गतिं दृष्ट्वा उत्तरायणस्य दक्षिणायनस्य विभागः जायते, तद्वत्एकमपिब्रह्मसर्वेषु स्थावरजङ्गमेषुस्थित्वानानारूपंनानावर्णं

ISSN 2348-8263

धारयति। सूर्यस्य दक्षिणायनोत्तरायणगतिः ज्योतिषशास्त्रेलिखिताऽस्ति। सूर्यादयः अत्यन्तं भाष्कराः भवन्तिएवं चन्दादयः अल्पभाष्कराः भवन्ति। यथा शुक्तिः नरजतंभवति, नवारजतोत्पादनेशुक्तिः कारणंभवति। तद्वत् संसारस्य स्थितिः ब्रह्म व्यतिरिक्ता नास्ति। अर्थात्नकदापि पदार्थस्य उत्पत्तिः जायते नवाविनाशोऽस्ति। नियतिरूपेण ब्रह्मसर्वैः अनुभूयते। चिन्मात्रस्वरूपंब्रह्मभवत्सुवर्तते। अस्मिन्पदार्थस्वरूपेब्रह्मणि जगदध्यस्तम्। **“वस्तुतः ब्रह्मनजगद्रूपेणपरिणमते। अपितु निवर्तते।”**[४]

अस्मात्ब्रह्मणः आकाशः सम्भूतः, अकाशात् वायुः ,वायोः तेजः, तेजसः जलं, जलात् पृथिवीउत्पद्यते। अज्ञानीजनानांतत्त्वबोधार्थं जगत्सृष्टेः प्रतिपादनंभवति। सृष्टिः नतात्त्विकी। यदि सृष्टिः तात्त्विकी स्यात् , तर्हि अद्वैतव्याघातः स्यात्। शिलागर्भवत्ब्रह्म नित्यं, शान्तं, सत्स्वरूपम्। किन्तुअज्ञानीनांकृतेब्रह्मअसद्रूपेण प्रतीयते। तत्त्वतः ब्रह्मनअस्तंभवतिनउदितं च भवति। प्रपञ्चः स्वतः मिथ्याभूतः, ब्रह्मणि अध्यस्तश्च। ब्रह्माकाशेजगदाकाशं मिथ्या वर्तते। यथा महाकाशेघटाकाशः। यदि ब्रह्मसत्तायाः व्यतिरिक्ता जगत्सत्ता स्यात्, तदा अद्वैतव्याघातः। आत्मास्वतः स्फुरणरूपः भवति। यथा श्लोकः-

**“भाविनामार्थकलनैः किंचिदूहितरूपकम्।**

**आकाशादणुशुद्धं च सर्वस्मिन्भाविबोधनम्।।”**

अयं कार्यकारणसमुदायरूपः भवतिजीवः, यः संकल्पभूतस्य गन्धादितन्मात्रस्य कल्पनांकरोति। एतदेव तन्मात्रयुक्तं मनः यत् विषयं येनरूपेण ग्रहितुमिच्छतितेनैवरूपेणतत्परिणमते।

**ग्रन्थसूची-**

१. छान्दोग्योपनिषद्.६.३.२

२. यो.वा.नि.प्र.उ.१८७.२१.श्लो–२१

 ISSN 2348-8263

३. यो.वा.नि.प्र.उ.१८७.२२.श्लो-२५

४. यो.वा.नि.प्र.उ.१८७.२२.श्लो-३०

## वेदान्तदिशादक्षिणामूर्तिस्तोत्रस्यतात्त्विकविवेचनम्

श्रीबिभुदत्तमिश्रः
अतिथि-अध्यापकः
अद्वैतवेदान्तविभागः, सदाशिवपरिसरः, पुरी

स्तुतिः नाम प्रंशसा। स्तूयतेअनेन इति स्तोत्रम्। स्तुतीनांसमष्टिःस्तोत्रम् इति वक्तुंशक्यते। यत्रग्रन्थेदेवतांकाञ्चिदुद्दिश्यनतिर्निबध्यतेतत्स्तोत्रम्। स्तोत्रप्रसङ्गेभावस्यप्रकाशनायकविभिःप्रयासःक्रियते, अतः अस्यापिकाव्यभेदरूपतापर्यवसिता। अस्यकाव्यभेदस्यादिमंरूपंरुद्राध्यायादौवेदेदृश्यतेतत्रहिनतिर्निबद्धैव, प्रार्थना अपि स्फुटाः, "नमस्ते रूद्रमन्यवे" इति स्तोत्ररूपंवैदिकंसाहित्यंसुप्रकाशम्।

वेदतःपरतःपुराणेषुइतिहासेषु च स्तोत्राणिप्राप्यन्ते। महाभारतेरामायणेश्रीमद्भागवते च स्तुतिसाहित्यस्यउत्तमानिनिदर्शनानिदृश्यन्ते।मार्कण्डेयपुराणस्थंभगवतीस्तोत्रमपिप्रशंसनीयम्। ततःपरमपिकुमारसम्भवेस्तोत्रमुपनिबद्धंयन्महाकाव्याङ्गमितिपृथक्स्तोत्रसाहित्यरूपेणनाङ्गीक्रियते।

लोकेभक्तिमार्गकाःअधिकतयास्तुतिंकुर्वन्ति इति दृश्यते। परन्तु ज्ञानमार्गीणः अपि स्तूतिंकुर्वन्तिइत्यपिदृश्यते। यथा आचार्यःशङ्करः। शङ्कराचार्यविरचतत्वेनबहवःस्तोत्रग्रन्थाःप्रथन्ते। स्तोत्ररत्नाकरादिषुसंग्रहग्रन्थेषुयावन्तिस्तोत्राणिसन्तितानि यदि एकत्र सङ्कलितानिभवेयुः तदा महाभारतस्य विशालता तत्रापतितास्यात्। तेषांस्तोत्राणांविषयाःभाषाशैल्यश्च तथा भिन्ना यथा तेषामनेकर्तृकत्वंमन्तव्येवभवति। अतः भिन्नभिन्नशङ्कराचार्यकृतानितानिमतानि। शङ्करभगवत्पादस्यासने ये प्रत्यग्रशङ्कराआरुद्धास्तेसर्वेपिस्वभक्तिप्रकटनायस्तोत्राणिनिबबन्धुः।सम्प्रतिकतमंकस्यशङ्करस्यरचनाभूतंस्तोत्रमितिवक्तुम् अशक्यंयावद्भाषाशैलीप्रभृतिगुणजातंविशिष्यनालोचितंस्यात्। एवमनिर्णयेसत्यपिआदिशङ्कराचार्यस्यस्तोत्रमितिसर्वेप्रीत्यास्वीकुर्वन्ति।

ISSN 2348-8263

वस्तुतः स्वजीवने यथा सःभाष्यंरचितवान्तथैवस्तोत्राणि अपि। तेन स भक्तिमार्गीइत्यपिसिध्यति। स स्वयमेवकथयचिविवेकचूडामणौयत्मोक्षसामग्रीषुभक्तिरेवगरीयसी। भक्तिः नाम स्वात्मानुसंधानमिति। अतः एवतेनज्ञानगर्भकंस्तोत्रादिकंप्रणीतवान्।। स्तोत्रम्अर्थवादःइत्यपिभवितुंयुक्तम्। यतोहिस्तोत्रेणकश्चनआकर्षितोभूत्वातस्मिन्मार्गेअग्रसरति। एवं च एकंस्तोत्रंभवतिश्रीदक्षिणामूर्तिस्तोत्रम्। दक्षिणामूर्तिःशिवस्यअवतारः तथा ज्ञानस्यसर्वोच्चदेवता। अस्यअवतारस्यमाहात्ममिदंवर्ततेयत् संगीत तथा अन्यशास्त्रवेत्तात्वेनप्रतिनिधित्वंकरोति। स्तोत्रम्अर्थवादपरकतया अपि भवति। येनपठनेनतत्रप्रवृत्तिःस्यात्। वेदानतत्वंस्तोत्ररूपेणप्रचारस्यएकमेवकारणंभवतिमन्दमतीनांवेदान्तेप्रवृत्तिःस्यात् यथा इति। एतादृशंस्तोत्रंभवतिश्रीदक्षिणामूर्तिस्तोत्रम्। अस्य रचयिता अ◌ादिशङ्कराचार्यः।

अस्यस्तोत्रस्योपरिअनेकाःटीकाःविरचिताःवर्तन्ते। विभिन्नासुभाषासु च व्याख्याःकृताःवर्तन्ते। अत्रशोधकार्येटीकाद्वयमेव मूलतः स्वीकृतम्मया। स्वयंप्रकाशयतिविरचितातत्वसुधाव्याख्या तथा सुरेश्वराचार्यैःकृतंमानसोल्लासोनमकंव्याख्यानपरकंवार्तकम्। अपि च मानसोल्लासस्योपरिरामतीर्थपरिकल्पितंमानसोल्लासवृत्तान्तम्अभिधेयकंव्याख्यानमपिलभ्यते।

दक्षिणामूर्तिः इति उच्यते बहुधा। परन्तु अस्याःदेवतायाःमन्दिरंकुत्रवर्ततेचेत्उज्जैयीन्याःमहाकालःएवदक्षिणामूर्तित्वेनपूज्यते। किञ्चदक्षिणामूर्तिःमन्दिरंदक्षिणभारतेबहुत्रलभ्यते। अपि आमेरिकायाम्आर्षबोधगुरुकुले अपि दक्षिणामूर्तिमन्दिरंविद्यते। भगवान्श्रीशङ्कराचार्यःअलौकिकप्रतिभासम्पन्नमहापुरुषःआसीत्। सःअसाधारणविद्वत्ता, तर्कपटुता, दार्शनिकसूक्ष्दृष्टिःरहस्यवादी आध्यात्मिकता कवित्वशक्तिःधार्मिकविद्वत्ता आदि गुणानांसमवेष्टितंरूपमासीत्। आचार्यस्यआर्विभावःअष्टमशतकेकेरलस्यकालाडीग्रामेबभुव। लोकसंग्रहार्थंतस्यजीवनमुत्सर्गीकृतवान्सः। सनातनधर्मस्यरक्षणायचतुरान्मठान्स्थापयामासभारतस्यचतुर्दिक्षु। पूर्वेगोवर्धनमठः, पश्चिमेद्वारिकायाम्, उत्तरेबदरीनाथे, दक्षिणेशृङ्गेरीमठः इति। गौडपादाचार्यस्यप्रशिष्य तथा गोविन्दाचार्यस्यशिष्यत्वेनशङ्कराचार्यस्यप्रसिद्धिःवर्तते। किञ्चदार्शनिकेषुविश्वेशङ्कराचार्यस्य नाम सर्वोपरि वर्तते। वेदान्तस्यसर्वःसम्प्रदायःआत्मानमुपनिषदाश्रितमेवपरिचाययन्ति। किन्तु शङ्कराचार्यस्यएवदर्शनंऔपनिषद्दर्शनंभवति। आचार्येणयुक्तियुक्ततयाप्रतिपादितंयत्अद्वैतमेवउपनिषदांदर्शनं तथा अद्वेतेएवश्रुतिवाक्यानां एकरूपता सिद्ध्यति।

ISSN 2348-8263

सः एवब्रह्मविवर्तवादंप्रतिष्ठांकृतवान्। अपि च श्लोकार्धेनप्रवक्ष्यामियदुक्तंग्रन्थकोटिभिः, ब्रह्म सत्यंजगन्मिथ्याजीवोब्रह्मैवनापर इति उद्घोषितम्। श्रुतिप्रस्थाने, स्मृतिप्रस्थाने, तथा च सूत्रप्रस्थाने च भाष्यंरचयामास। यद्यपि स ज्ञानमार्गीआसीत् तथापि कदापि भक्तिमार्गं न निनिन्द। अथ च स्वयमेवभक्तिस्तोत्रादिकंविरचितम्। तादृशंस्तोत्रंपठित्वासर्वेषांहृदयंभावावेगयुक्तंभवति। तेषुस्तोत्रेषुसौन्दर्यलहरी, आनन्दलहरी, चर्पटपञ्जरीका, मोहमुद्गरं, श्रीदक्षिणामूर्तिस्तोत्रादिकंअन्यतमत्वंभजन्ते। एतादृशस्तोत्रेतेनअत्यन्ततयासरलतयावेदान्तसिद्धान्ताःप्रतिपादिताः।

दक्षिणामूर्तिस्तोत्रस्यप्रथमश्लोके "विश्वंदर्पणदृश्यमानगरीतुल्यमिति" उक्त्वास्तोत्रमारभते। इह प्रश्नःजायतेयत् एवं वचने का युक्तिःस्यात् अर्थात् को वाप्रश्नंमनसिनिधाय एवं प्रस्तौतिशङ्कराचार्यः। तत्रउत्तरंलभ्यतेयत्

"सर्वज्ञस्सर्वकर्त्ता च कथमात्माभविष्यति।

शिष्यंप्रतीत्थंपृच्छन्तंवक्तुमारभतेगुरुः।।[15]"इति।

जीवेश्वरयोः कदापि एकत्वंभवितुंनार्हति। यतोहिविरुद्धधर्मयुक्तौभवतः उभौ। जीवःअल्पज्ञःभवति। किञ्चईश्वरःसर्वज्ञःभवति। इत्थंचिन्तयन्तंपृच्छन्तंवाशिष्यं प्रति स्तोत्रमारभतेइत्यर्थःगम्यते।

**प्रपञ्चमिथ्यात्वम्**

प्रथमेश्लोकेजगत्स्वप्नवत् मिथ्या इति प्रतिपादयति।.यथा निद्रायांदृश्यमानं वस्तु मिथ्या भवतिजाग्रदवस्थायामपिदृश्यमानं वस्तु मिथ्या भवति। स्वाप्नंजगत्साक्षिणिस्वस्मिन्नध्यस्ततयास्थितमपिस्वस्मात्बहिःस्थितमिवानुभवतितद्वदेवेदंजाग्रत्प्रपञ्चमपिस्वस्मिन्प्रत्यक्चैतन्ये अध्यस्ततयास्थितमेवस्वाध्यस्तदेहात्म्याध्यासवशात्स्वस्माद्बहिरिवपश्यति।
अ◌ादौतावत्गौडपादाचार्यःस्वप्नस्यमिथ्यात्वंप्रतिपादनायप्रस्तौतियत्

"वैतथ्यंसर्वभावानां स्वप्न आहुर्मनीषिणः

अन्तःस्थानात्तुभावानांसंवृतत्वेनहेतुना"।।[16] इति।

---

[15]मानसोल्लासेप्रथमोल्लासेसप्तमःश्लोकः

[16]गौडपादकारिकावैतथ्यप्रकरणेप्रथमश्लोकः।

ISSN 2348-8263

अर्थात्

स्वप्नावस्थायांपदार्थाःशरीरान्तर्वतित्वात्स्थानसङ्कोचाच्चमनीषिणःस्वप्नदृष्टपदार्थानांमिथ्यात्वंप्रतिपादितवन्तः। पुनश्च

"अदीर्घत्वाच्चकालस्यगत्वादेशान्नपश्यति

प्रतिबुद्धश्चवैसर्वस्तस्मिन्देशे न विद्यते"॥[17] इति।

अर्थात् समयस्यदीर्घत्वाभावात्कोऽपिदेशान्तरंगन्तुं न शक्नोति। किञ्चउत्थायपश्यतियत्देशान्तरं न कोऽपिगतवान् तथा च यथा पूर्वमासीत्तथैवविद्यते। अतः निद्रायांदृश्यमानंवस्तुसर्वं मिथ्या भवति। किन्तु जागरिते अपि दृश्यमानःपदार्थः मिथ्या इति कथमितिप्रतिपादयितुमुच्यतेयत्जाग्रदवस्थायामपिपदार्थानांमिथ्यात्वंभवति। यतोहिस्वप्ने यथा पदार्थाः भवन्तितथैवजागरिते अपि भवन्ति। भेदस्तुएतावदेवयत्स्वप्नेशरीरान्तर्गताःभवन्ति तथा जागरितेशरीरात्बहिःभवन्ति। अपि च ग्राह्यग्राहकत्वेन[18]हेतुनासमत्वेनस्वप्नजागरितस्थानयोःएकत्वंप्रतिपाद्यते। उक्तं च

"अन्तःस्थानात्तुभेदानांतस्माज्जागरितेस्मृतम्।

यथा तत्र तथा स्वप्नेसंवृतत्वेनभिद्यते॥

स्वप्नजागरितस्थानेह्येकमाहुर्मनीषिणः।

भेदानांहिसमत्वेनप्रसिद्धेनैवहेतुना॥[19]" इति॥

**जगतःप्रतिबिम्बत्वम्**

"विश्वंदर्पणदृश्यमाननगरीतुल्यम्" इति वचनेनज्ञापयितमिच्छतियत्विश्वं नाम विविधप्रत्ययगम्यंवियदादिसर्वमिदंजगत्[20], दर्पणेदृश्यमानंप्रतिबिम्बवत्भवति। उक्तं च

निश्छिद्रदर्पणेभातिवस्तुगर्भंबृहज्जगत्

---

[17]गौडपादकारिकावैतथ्यप्रकरणेद्वितीयश्लोकः।

[18]गौडपादकारिकायाःवैतथ्यप्रकरणेशाङ्करभाष्ये।

[19]गौडपादकारिकायाःवैतथ्यप्रकरणे

[20]स्वयंप्रकाशयतिविरचिततत्वसुधाव्याख्यायाम्।

 ISSN 2348-8263

सच्चित्सुखं तथा नानाजगद्धर्मिदंवियत् ।।[21]इति।

इदंविश्वंदर्पणेप्रतिबिम्बितामिवदर्पणान्तर्गतस्थमेवविश्वंमाययाबहिर्वत् आभातीति।स्पष्टार्थं च उच्यतेहि "अन्तरस्मिन्निमेलोका अन्तर्विश्वमिदं जगत्

बहिर्वन्माययाऽभातिदर्पणेप्रतिबिम्बितम्[22]"।।इति।

**गुरोः आवश्यकतातथाईश्वरानुग्रहत्वम्**

स्तोत्रे "प्रबोधसमये" इति पदंलभ्यते। तेन च गम्यतेयत् यदा ज्ञानंभवति तदा शिष्यःआत्मानंयथार्थतयाजानाति। स च प्रबोधसमयभवतिगुरोपदेशसमयः। अर्थात् आचार्यप्रसादेनअनुग्रहणेन च आत्मज्ञानंलभ्यते। अतएवउच्यते

"श्रुत्याचायप्रसादेनयोगाभ्यासवशेन च

ईश्वरानुग्रहेणापिस्वात्मबोधो यदा भवेत्"[23]।।इति।

किञ्चश्रुतिरपिप्रतिपादयतियत्गुरोपदेशेनतत्त्वज्ञानंसम्भवति।अतःगुरोः आवश्यकतांद्योतनायश्रुतिःकथयतियत् "वेदान्तविज्ञानसुनिश्चितार्थाः"[24], "आचार्यवान्पुरुषो वेद"[25], "ततस्तुतंपश्यतेनिष्कलंध्यायमानः"[26] इति। पुनश्च ईश्वरानुग्रहस्यापिअ◌ावश्यकतावर्ततेआत्मज्ञानलाभे। अतः श्रुतिःभवति "यमेवैषवृणुतेतेनलभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम्"[27] इति। स्तोत्रेगुरुः तथा ईश्वरःएकःएव न अन्यः इति प्रतिपादयितुं "तस्मैश्रीगुरुमूर्तये नम इदंश्रीदक्षिणामूर्तये" इति उक्तम्। तथैवप्रस्तुतंसुरेश्वराचार्यैःयत्

"ईश्वरोगुरुरात्मेतिमूर्तिभेदवीभागिने

व्योमवद्व्याप्तदेहायदक्षिणामूर्तयेनमः"[28]।। इति।

एवञ्चप्रथमश्लोकेसरलतयाजगतःस्वप्नवतिमिथ्यात्वं, प्रतिबिम्बत्वंप्रतिपादितम्। तेन सह गुरोः तथा

---

[21]पञ्चदश्याम्।

[22]सुरेश्वराचार्यकृतमानसोल्लासे।

[23]मानसोल्लासे

[24]तै.उ. ४-१२

[25]छा. उ. ६-१४-२

[26]मु.उ. ३-१-१८

[27]मु. उ. ३-२-३

[28]मानसोल्लासः १-३०

ISSN 2348-8263

ईश्वरस्यमाहात्म्यमपिउद्घोषितम्।

### जगत्कारणतत्वम्

स्तोत्रस्यद्वितीयश्लोकेजगत्कार्यंचेत्कारणंकिमितिप्रश्नस्यसमाधानंदीयते। अपि इह वेदान्तमतमुपस्थाप्यअन्यदर्शनानांमतं न सम्यक् इति परोक्षेणसूचितम्। श्रुतिराश्रितयाएवमतंप्रतिपाद्यते। पत्रपुष्पफलशाखाविटपात्मकवृक्षः यथा उत्पत्तेःप्राक्बीजरूपेणतिष्ठतितथैवइदंजगत्सृष्टेःप्राक्निर्विकल्पं नाम आत्ममात्रमेवासीत्। तथा च श्रुतिः "आत्मा वाइदमेकएवाग्रआसीत्"[29], "सदेवसोम्येदमग्रअ ासीत्"[30], "सदेवसोम्येदमग्रआसीदेकमेवाद्वितीयम्"[31], "अ ात्मावाइदमेकएवाग्रअ ासीन्नान्यत्किञ्चनमिषत्"[32] इति। सृष्टेःप्राक् आत्मा एवअ ासीत् इति प्रमाणितंभवति। यदि जगतःकारणत्वेनआत्मनःग्रहणंस्यात्तर्हिकीदृशंकारणमित्यपिवक्तव्यंभवति।

लोकेदृश्यतेयत्कुलालःमृत्तिकयाघटंनिर्माति। अत्रघटंकार्यंभवति। मृत्तिकाउपादानं तथा कुलालःनिमित्तःभवति। तद्वत्जगत् यदि कार्यंस्यात्तस्यउपादानंनिमत्तं च के इति जिज्ञासा जायते। स्तोत्रेएवउत्तरंदीयतेयत् आत्मा एवनिमित्तोपादानो। तत्रदृष्टान्तत्वेन मायावी (ऐन्द्रजालिकः) उदाहृयते। मायावी यथा स्वयमेव वस्तु निर्मातितद्वत् आत्मा अर्थात् ईश्वरःजगत्सृजति। वक्तुंशक्यतेयत् मायावी स्वशक्त्यासर्वंकरोतीति। आत्मा कथंकुर्यात् इति चेत्उत्तरंदीयतेमाययाएववैचित्र्यचित्रीकृतमिति। स्वेच्छया अपि जगत्सृजति। अतः अपरंदृष्टान्तःप्रदीयतेमहयोगीवइति।अथ च उक्तं

"इतिशङ्कानिवृत्त्यर्थंयोगिदृष्टान्तकीर्तनम्।
विश्वमित्रादयःपूर्वेपरिपक्वसमाधयः॥

### साकारब्रह्मोपासनम्

---

[29]बृ.उ. ४-४-६

[30]ऐ.उ. १-१-१

[31]छा.उ. ६-१

[32]ऐ.उ. १-१

 ISSN 2348-8263

संसारेद्विविधाजनाःदृश्यन्ते। तीक्ष्णतियुक्ताःमन्दमतियुक्ताश्च। अस्मिन्श्लोकेमन्दमतीनांकृतेउपायःज्ञाप्यते। कथंमन्दमतयःजनाःअध्यात्मदिशिअग्रेसरःभविष्यन्ति इति श्लोकस्यतात्पर्यः। यद्यपि वेदान्तमते ब्रह्म निराकारंनिर्गुणं च भवति, तथापि निर्गुणंतत्वंज्ञातुंसाकारोपासनाउपायत्वेनस्वीकुर्वन्ति। अतः शङ्कराचार्यःभाष्येमध्येमध्येकथयतिशिलायांविष्णुपूजाक्रियते इति। अतः अत्रापितस्य पुनः कथनंक्रियते। अतः उच्यते च तत्वसुधाकारैःयत् "इदानीमुक्तब्रह्मापरोक्षज्ञानेमन्दाधिकारिणामष्टमूर्त्युपासनंक्रममुक्तदाक, उत्तमाधिकारिणां श्रोतव्यादिश्रुतिसिद्धवेदान्ततद्विषयब्रह्मविचारसाधनमित्यभिप्रेत्याह भूरम्भमांसीति"[33]। भूःपृथिवी, अम्भासिजलानि, अनलः अग्नि, अनिलोवायुः, अम्बरंआकाशः, अहर्नाथःसूर्यः, हिमांशुःचन्द्रः, पुमान्सकलकर्मविद्याधिकारीजीवः, इति एवम्प्रकारेणयस्यैवपरमेश्वरस्यसर्वज्ञस्यसर्वशक्तेःसच्चिदानन्दाद्वयस्यसदाशिवस्यैवमूर्त्यष्टकंमूर्तीनांविग्रहभूतानामष्टकंआभाति आ समन्ताद्भाति। उपासकःस्वदेहेवर्तमानपंचभूतानिव्यष्टिभूतानिसमष्टिभूतैःपाणापानौ च सूर्यशशाङ्कभ्यामेकीकृत्य, पञ्चभूतात्मकशरीराभिमानिनंस्वात्मानमष्टमूर्तिपरमेश्वरेणैकीकृत्य, सकलव्यापीअष्टमूर्त्यात्मकस्सदाशिवोस्मीतिचिन्तयेत्। ततोभावनातिशयेनतत्सायुज्यं प्राप्य सर्वैश्वर्यसम्पन्नोन्तेतत्प्रसादासादितंतत्वज्ञानेनतत्वसाक्षात्कारेणविमुच्यते इति। सर्वाधिष्ठानात्सच्चिदात्मकात्परमेश्वरादन्यत्पृथक्किञ्चिदपि न विद्यते न भवति। सर्वस्यतस्मिन्परमेश्वरेध्यस्तत्वेनतन्मात्रत्वात्। तथैवश्रुतिश्च

"विश्वंभूतंभुवनंचित्रं बहुधा जातंजायमानं च यत्।
सर्वोह्येषरुद्रस्तस्मैरुद्राय नमो अस्तु"[34]।इति॥

अपि च

"यस्मात्परंनापरमस्तिकिञ्चिद्यस्मान्नाणीयो न ज्यायोस्तिकश्चित्। वृक्ष इवस्तब्धोदिवितिष्ठत्येकस्तेनेदंपूर्णंपुरुषेणसर्वम्"[35]। इत्यद्याः। स्तब्धःनिश्चल,दिविस्वप्रकाशेस्वरूपे। तथा चोक्तरूपब्रह्मात्मज्ञानादुत्तमाधिकारिणामिहैवसच्चिदानन्दाद्वयेनपरशिवरूपेणअवस्थानलक्षणामुक्तिरासाद्यते। तथैवश्रुतिरपि

---

[33]तत्वसुधायाम्
[34]तै.उ. ४-२४
[35]तै.उ.४-१२

 ISSN 2348-8263

"अत्र ब्रह्म समश्नुते"[36]इति।

ईश्वरानुग्रहात्एवपुंसाम्अद्वैतवासना इति अवधूतगीतावचनम्। अर्थात् कस्यापिपुरुषस्यअद्वेते तदा एवप्रवृत्तिःभवति यदा ईश्वरस्यअनुग्रहः भवति। यथा ईश्वरानुग्रहःभवेत्तदर्थंस्तुतिः क्रियतेजनैः सर्वत्र। अतः तादृशजनानांकृतेस्तुतिपरकतयाअद्वैततत्वंसारल्येनप्रतिपादितम्अस्मिन्स्तोत्रे। स्तोत्रेशङ्कराचार्येणसंपूर्णम्अद्वेततत्त्वंव्याख्यातम् अस्ति। तत्रआदौजगतःमिथ्यात्वंप्रतिपादितम्। शिष्यस्यकृतेगुरोः आवश्यकता कथमस्ति तदपि प्रतिपादितम्। मायायाःशक्तिमत्वं तथा शक्तिद्वयमपिव्याख्यातम्। साधारणजनैःस्वजीवनेयत्अनुभूयतेतदाधारेणअवस्थात्रयंप्रतिपादितम्। किंचअवस्थात्रयेकथम्अ ात्मनः एकरूपता भवति तदपि सारल्येनप्रतिपादितम्। एवं च संसारेकथं च भवितव्यं तदपि आलोचितावर्तते।

वस्तुगत्यावक्तुंशक्यतेयत्मन्दमतीनाकृतेस्तोत्रमिदमुपकारकंभवतिअद्वेततत्वंबोद्धुम्। इह स्तोत्रेदक्षिणामूर्तिःगुरुत्वेनदेवतात्वेनब्रह्मत्वेन च उपस्थापितः। गुरुःमार्गदर्शयति। देवता अनुग्रहंकरोति। ब्रह्म तुसाक्षात्काररूपंफलमेव। अत्रअन्यत्एकं विशिष्टता अस्ति यत्निराकारोपासनायाम्असमर्थानांकृतेसोकारोपासोनाउपदिष्टा अस्ति। वस्तुतः एतत्सिद्धंभवतियत्स्तोत्रमिदंवेदान्ततत्वमेवप्रतिपादयति इति शम्।

सहायकग्रन्थसूची


1. रामानुजाचार्यः, २०००, श्रीभाष्यम्(प्रथम भाग), चौखम्बा संस्कृत प्रतिष्ठान, दिल्ली।
2. १९९९, ब्रह्मसूत्रशाङ्करभाष्यम्(एकादशटीकासंयुतम्), प्रो. योगेश्वरदत्तशर्मा(पाराशरः), नाग पब्लिशर्स, दिल्ली।
3. चन्द मिहिर, २००५, अष्टादशस्मृति(भाषाटीकासहित), राष्ट्रिय संस्कृत संस्थान।
4. भास्कराचार्यः, २००६, ब्रह्मसूत्रभाष्यम्, म.म.विन्ध्येश्वरीप्रसादद्विवेदी, राष्ट्रिय संस्कृत संस्थान।
5. वल्लभाचार्यः, २००२, श्रीमदणुभाष्यम्(प्रथमोभागः), रत्नगोपाल भट्ट, कृष्णदासअकादेमि, वाराणासी।
6. उपाध्यायः रामजी, २००६, भारतस्यसांस्कृतिकनिधि, चौखम्बाविद्याभवन, वाराणासी।
7. उपाध्यायः रामजी, २००९, भारतीयसंस्कृतिसौरभम्, चौखम्बासुरभारती प्रकाशन, वाराणासी।
8. श्रीमद्भगवद्गीता(शाङ्करभाष्यसहित), गीताप्रेसगोरखपुर।


[36]कठो.६-१४

 ISSN 2348-8263

9. Thangaswami R., 1980, अद्वैतवेदान्तसाहीत्येतिहासकोशः, University of Madras.

10. मिश्र रामचन्द्रः आचार्य, २०१०, संस्कृतसाहित्येतिहासः, चौखम्बाविद्याभवन, वाराणासी

## आस्तिकदर्शनेषु अद्वैतवेदान्तदर्शनस्य स्थानम्

मनोजकुमारगिरिः

शोधछात्रः

श्रीसदाशिवपरिसरः, पुरी

भारतीयचिन्तनधारायाः मूलंनिष्यन्दभूतं भवतिदर्शनम्। यच्च वैदिकसाहित्येन उपनिषदा च अनुप्राणितं विभिन्नदार्शनिकैश्च विश्लेषितम्। अस्य प्रभावः प्रायः सर्वस्मिन्वाङ्मये भवति। यद्यपि दर्शनशब्दः प्रेरणार्थकाद् "दृश्-धातोः करणार्थके "ल्युट्" प्रत्यययोगात् निष्पद्यते। तथापितेनधात्वर्थेन दर्शनस्य भावं ज्ञातुंन शक्यते।

१. "दृश्यते अनेनेतिदर्शनम्इति दर्शनस्य व्युत्पत्तिसिद्धोऽर्थः,

ज्ञानार्थकदृश्-धातोः करणे ल्युटि निष्पन्नोऽयं दर्शनशब्दः।

२. "विचारप्रयोजकं ज्ञानंदर्शनम्इतिवक्तुं शक्यते।

३. तत्त्वज्ञानप्रतिपादकंशास्त्रं दर्शनमित्यभिधीयते।

४. यथार्थतया ज्ञायन्ते पदार्थाः अनेनेतिदर्शनम्।

ISSN 2348-8263

दर्शनपदस्यात्र प्रदर्शितानिसर्वाणिअपिनिर्वचनानि शास्त्रसम्मतान्येव । अत: एववक्तुं शक्यते यत् तत्त्वज्ञानप्रतिपादकंशास्त्रंदर्शनमिति । ऋषिप्रणीतत्वादेव तेषां प्रामाण्यम्। तच्च दर्शनं भिन्नभिन्नऋषिभिरपवर्गसाधनीभूत-ज्ञानप्रतिपादनाय नैकमभवदितिअनेकानिदर्शनानिसमुत्पन्नानि।

दर्शनानांप्रवृत्ति: विभागश्च -

संस्कृतवाङ्मये दर्शनानि अतीवमहनीयंस्थानमलंकुर्वन्ति। तत्रभवद्भि: दिव्यचक्षुषै: अखिलपदार्थजातंकरतलामलकवत् प्रत्यक्षीकुर्वद्भि: महर्षिभि: विरचितंदर्शनं सत्यासत्यनिकषलक्षणंकिमपि महार्घमुपायनम्।

अस्य सरहस्यस्य प्रपञ्चस्य पथदर्शकंदर्शनशास्त्रमिति अभिधीयते। मनुष्य: निसर्गत: मननशील: सन्कर्माणि सीव्यति। कदाचित् स: विचिन्तयति नितरांजटिलामिमां समस्याम्। कोऽहम्? कुतोऽहम्? कस्मादयम्? इत्येवं जातीयकम्। तादृशचिन्तामननपरिणतिभूतमेवेदंदर्शनम्। आत्मासाक्षात्कारएव सर्वस्यापि प्राणभूतंपरमं लक्ष्यं श्रवणेनमननेन निदिध्यासनेन एवभवति। किं च श्रवणमनननिदिध्यासनादीनि मनीषिभि: दर्शनेहेतुत्वेनप्रतिपादितानि।

श्रोतेव्य: श्रुतिवाक्येभ्य: मन्तव्यश्चोपपत्तिभि:।
मत्वा तु सततं ध्येय: एतेदर्शनहेतव:।।[१]इति

किञ्चसांसारिकदु:खप्रचण्डस्वरूपस्य तापेनप्रतापितान्त:करण:कोवानवाञ्छतिकल्पवृक्षस्य शीतलच्छायामिवानन्दरूपां मुक्तिम्। एतादृशमुत्कृष्टफलदर्शनात्सम्भवतीति तात्पर्यम्।

ISSN 2348-8263

कोऽहम्? कस्मादहम्? कथमिहायातोऽहम्? परिदृश्यमानस्य जगतः सृष्टिः कस्मात्? किमिदंजगत् चेतनप्रवृतिकं? जीवनस्य लक्ष्यसिद्धये कोवामार्गः सुलभः ?इतिएतेषांमहत्त्वपूर्णानांमौलिकप्रश्नानांसमाधानं वयं दर्शनादेवप्राप्नुमः।

दर्शनशास्त्रमिदमास्तिकनास्तिकभेदेनद्विधाप्रथते भारतीयदर्शनपरम्परायाम् -

नास्तिकदर्शनानि- १. चार्वाकदर्शनम्, २. जैनदर्शनम्, ३. बौद्धदर्शनम् ।

आस्तिकर्दानानि- १. न्यायदर्शनम्, २. वैशेषिकदर्शनम्, ३. सांख्यदर्शनम्, ४. योगदर्शनम्, ५. मीमांसादर्शनम् (पूर्वमीमांसादर्शनम्), ६. वेदान्तदर्शनम् (उत्तरमीमांसादर्शनम्) ।

परन्तुआस्तिकदर्शनम्अत्र आलच्य बिषयः ।

आस्तिकदर्शनानि

१. न्यायदर्शनम्–

आस्तिकदर्शनपरम्परायां षण्णां दर्शनानामलङ्कारभूतं न्यायदर्शनमिदं महत्प्राधान्यं भजतेइतिनिर्विवाद एषः विषयः। दर्शनस्यास्य प्रवर्तकः महर्षिगौतमः। तस्य समयः विक्रमपूर्वचतुर्थशताब्दीआसीदिति इतिहासविदामाशयः। दर्शनमिदं प्राचीननव्यभेदाभ्यां द्विविधम्। महर्षिगौतमादारभ्य गङ्गेशोपाध्यायपर्यन्तं प्राचीनपरम्पराइतिप्रथा। गङ्गेशोपाध्यायादारभ्य नव्यपरम्परा आरब्धा। दर्शनमिदंप्रमाणशास्त्रोपकारकत्वेनअपि ज्ञायते। अत एवोक्तम् -

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।

आश्रयः सर्वधर्माणांविद्योद्देशेप्रकीर्तिता ।।[२]इति।

ISSN 2348-8263

आर्षधर्मोपदेशञ्चवेदशास्त्रविरोधिना।

यस्तर्केणानुसन्धत्ते स धर्मवेदनेतरः।।३ इति।

महर्षिगौतमेन प्रणीतन्यायसूत्रं दर्शनस्यास्याधारभूतम्। प्रमेयसिद्ध्यर्थं चत्वारिप्रमाणानि एभिरङ्गीकृतानि। तानि च प्रत्यक्षानुमानोपमानशब्दाख्यानि। तदुक्तं सूत्रकारैः "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति।४

(क) प्रत्यक्षम् - इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेशमव्यभिचारि-व्यवसायात्मकप्रत्यक्षमित्युच्यते। आत्मामनसासन्निकृष्यते, मनः इन्द्रियेण, इन्द्रियमर्थेन ततःतद्वतितत्प्रकारकमवधारणात्मकं यज्ज्ञानमुपजायते तदेव प्रत्यक्षम् इति। प्रत्यक्षज्ञानं षड्विधसन्निकर्षयुक्तं भवति। प्रत्यक्षं द्विविधम्।

१. सविकल्पकप्रत्यक्षम्, २. निर्विकल्पकप्रत्यक्षम्

तत्र१.यद्विशेषणविशेष्यावगाहिज्ञानं जायते तत्सविकल्पकप्रत्यक्षमिति।

२.नामजातियोजनाहीनवस्तुमात्रावगाहिज्ञानं जायते यत् तत्निर्विकल्पकम्।

(ख)अनुमानम्-प्रत्यक्षकारणानन्तरं जायमानं ज्ञानमनुमानम्। तच्चानुमानंत्रिविधम्। यथा- १.पूर्ववत्, २.शेषवत्, ३.सामान्यतो दृष्टमिति।

यत्र अनुमानेन कार्यमनुमीयते तत्पूर्ववत्। यथा- मेघान् दृष्ट्वा वृष्टिर्भविता इत्याकारकं ज्ञानम्। यत्र कार्ये कारणमनुमीयते तत्शेषवत्। यथा - नद्यां प्रवाहमवलोक्य वृष्टिरासीदिति अनुमीयते। अन्यत्र दृष्टस्य अन्यत्र दर्शनमिति सामान्यतो दृष्टः। यथा - आदित्यस्य। पुनः एतत्स्वार्थपरार्थभेदेनद्विधा।

१. यत्र वह्निधूमानुमानंस्वज्ञाननिमित्तंतत्स्वार्थानुमानम्।

 ISSN 2348-8263

२. यत्र वह्निधूमानुमानं पञ्चावयववाक्यैः परबोधनार्थं प्रयुज्यते तत्परार्थानुमानम्।

न्यायशास्त्रे अनुमानस्य पञ्चावयवाः -

पर्वतोवह्निमान्इतिप्रतिज्ञा । धूमवत्वात्इतिहेतुः। यो योधूमवान्सोऽग्निमान्। यथा महानसः इत्युदाहरणम् । तथा चायम् इत्युपनयः । तस्मात्तथेतिनिगमनम् ।५

(ग) उपमानम्-प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्। (घ) शब्दः-आप्तोपदेशः शब्दइति।

२. वैशेषिकदर्शनम् -

भारतीयदर्शनपरम्परायां वैशेषिकदर्शनमिदंसर्वेषांदर्शनानामुपकारकम्, सर्वप्राचीनत्वाच्च प्रमुखस्थानमावहति। सर्वदर्शनोपकारकत्वंभवतीदंदर्शनम्। विशेषपदार्थमङ्गीकृत्य प्रवृत्तमिदं दर्शनमित्यतः वैशेषिकमित्युच्यते। विशेषस्तु नित्यद्रव्यवृत्तिकः नित्येतरव्यावर्त्तकश्च। विशेषपदार्थस्य प्रतिपादनार्थत्वादस्य वैशेषिकमितिनाम। दर्शनस्यास्य प्रणेतामहर्षिकणादः। अतः दर्शनस्यास्य काणाददर्शनमितिप्रथा।

वैशेषिकनये सप्तैवपदार्थाः, प्रत्यक्षानुमानमिति प्रमाणद्वयम्। कणादमहर्षिरचितंवैशेषिकसूत्रं दर्शनस्यास्य मूलाधारः। अस्मिन्दर्शने सप्तत्युत्तरत्रिशतसूत्राणि दशाध्यायाश्च सन्ति। प्रत्येकमध्यायः आह्निकद्वयोपेतो भवति। तत्र प्रथमाध्याये तावद्धर्मस्य स्वरूपंमुक्तिसाधनहेतुभूतानांषट्पदार्थानांविचारः, कार्यकारणसामान्यविशेषादीनांनिरूपणम्, शुद्धसत्तायाः स्वरूपादिवर्णनंकृतम्। द्वितीयाध्याये पुनः पृथ्वीजलतेजोवाय्वाकाशादिनव- द्रव्याणां गुणविचारः, ततः दिक्कालादीनांस्वरूपवर्णनम्, शब्दस्य नित्यानित्ययोः विचारश्च प्रस्तुतः। तृतीयाध्याये आत्मनिरूपणेन सह आत्मनः अस्तित्वंततः परस्परस्थितिसम्बन्धादिकंतदनेकत्वादिविचारः

शरीरेन्द्रिय-विषयाणां च स्वरूपवर्णितम्। शरीरानेकत्वादिचर्चा: विहिता:। पञ्चमाध्याये कर्मण: तद्भेदानां च वर्णनाकृतावर्तते। षष्ठाध्याये श्रुतिसम्मतधर्माधर्मादीनांमीमांसाकृता। सप्तमाध्याये अणु-महत्-ह्रस्व-दीर्घ-आकाशात्मादीनांस्वरूपं तेषुपरस्परसम्बन्ध:, तत: दिक्काल-एकता-संयोग-वियोग-शब्दपरत्व-समवाय-विचाराश्च प्रस्ताविता:। अष्टमाध्याये सामान्यविशेषज्ञानयो: विवेचनपुरस्सरं विभिन्नेन्द्रियाणां स्वभाव: सूक्ष्मताविषयकप्रस्तावश्च कृत:। नवमाध्याये असत्कार्यवाद: अभाव -अनुमान–शब्द-उपमान-स्मृति-स्वप्न-विद्याऽविद्यादीनांस्वरूपपरामर्श: कृत:। दशमाध्याये सुखदु:खयो: विवेचनेन सह समवायसमवायिकारणयो: विचार: वेदस्य प्रामाण्यं मोक्षस्य निरूपणादिकं च कृतंवर्तते।

नि:श्रेयसमेव दर्शनेऽस्मिन् मुख्यप्रतिपाद्यो विषय:। द्रव्यगुणकर्मसामान्यविशेष-समवायाख्यानां षट्पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानं जायते। तत: नि:श्रेयसाधिगम: इति एतै: मन्यते। तदुक्तंसूत्रकारै: -"धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्य-विशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्यतत्त्वज्ञानान्नि:श्रेयसम्६ इति।

३. सांख्यदर्शनम् -

परमर्षिकपिल: दर्शनस्यास्य प्रणेता। तत्प्रणीतं सांख्यसूत्रमेव दर्शनस्यास्य आधारभूतम्। सांख्यसूत्राणां भाष्यं सांख्यप्रवचनभाष्यनाम्ना प्रथितम्। विज्ञानभिक्षु: तद्भाष्यस्य प्रणेता। सांख्यसूत्रं षट्स्वध्यायेषुविभक्तम्। प्रथमाध्याये दु:खत्रयहेतु:, तन्निवृत्त्युपाय:, बन्धमोक्षौ, जीवशरीरात्मपदार्थानां नित्यता, प्रकृतिपुरुषयो: विचारश्च प्रतिपादित:। द्वितीयाध्याये सृष्टे: विकास:, मनोबुद्ध्यहङ्कारेन्द्रियान्त:करणादीनां वर्णनंकृतम् । तृतीयाध्याये

प्रकृत्याः कार्याणि, पृथिव्यादिमहाभूतानां शरीरद्वयस्य चोत्पत्तिः कर्मज्ञाने, ज्ञानस्य पञ्चसाधनानि, मिथ्याज्ञानम्, अष्टौ सिद्धयः, विवेकः, मुक्तिस्वरूपादिविचाराः प्रस्तुताः।

सांख्यमते सृष्टिनिर्वहणार्थं भोगापवर्गार्थं च पञ्चविंशतितत्त्वानिनिर्दिष्टानि। तानि च चतुर्धाविभक्तानि। तद्यथा - १. प्रकृतिः, २. विकृतिः, ३. प्रकृतिविकृतिः, ४. नप्रकृतिः नविकृतिः इति। तदिदं द्रढयति ईश्वरकृष्णः -

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।

षोडशकस्तुविकारोनप्रकृतिर्नविकृतिः पुरुषः।।७ इति।

प्रकृतितत्त्वं, सत्त्वरजस्तमोगुणानां साम्यावस्था, सर्वस्यापि कारणीभूतं स्वयमविकृतञ्च। प्रकृतिविकृतितत्त्वानिमहत्त्वम्, अहङ्कारः,पञ्चतन्मात्राणि च सप्तसंख्यकानि। विकृतितत्त्वानि- पञ्चमहाभूतानि, एकादशेन्द्रियाणीति। प्रकृतिविकृतिभिन्नतत्त्वंपुरुष एकस्व। एवंपञ्चविंशतितत्त्वानां सम्यज्ज्ञानेन मुक्तिः लभ्यते इतिएतेषमाशयः। उक्तं च तत्साम्प्रदायिकैः:-

पञ्चविंशतितत्त्वज्ञो यत्रतत्राश्रमे वसन्।

जटीमुण्डीशिखीवापि मुच्यते नात्र संशयः।।८ इति।

प्रमेयसिद्धये प्रत्यक्षानुमानशब्दान्तानि त्रीणिप्रमाणानिएभिः अङ्गीकृतानि। एतन्मते पुरुषः पुष्करपलाशवत्निर्लेपः, असङ्गः कूटस्थश्च। पुरुषः नएकः किन्तुअनेकः। अलोहितोऽपिमणिः यथा जपाकुसुमसंसर्गात् लोहितगुणयुक्तो भवतितद्वत् स्वयं असङ्गोऽपि पुरुषः प्रकृतिसंसर्गात् सृष्ट्यादिकार्येण सम्बद्ध्यते। प्रकृतिश्च स्वयं जडाऽपि स्वभाविकतया

 ISSN 2348-8263

पुरुषार्थं प्रवर्तते। यथा अचेतनमपि क्षीरंवत्सविवृद्ध्यर्थं प्रवर्ततेतद्वत्। तथा चोक्तं सांख्यकारिकायाम्-

वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य।

पुरुषविमोक्षनिमित्तंतथाप्रवृत्तिः प्रधानस्य।।९ इति

त्रिविधदुःखस्य आत्यन्तिकनिवृत्त्या मोक्षः सम्भवति। स च मोक्षः पुरुषस्य स्वस्वरूपावस्थितिरूपः। प्रकृतिपुरुषयोः संयोगात् सृष्टिः तद्वियोगात् मोक्षइतिएतेषामाशयः। प्रकृत्याः पुरुषाद्वियोगाभावः ननटीवत्किन्तुकुलवधूवदिति आचार्यवाचस्पतिमिश्राः अमन्यन्त। तदुक्तमीश्वरकृष्णेन -

प्रकृतेः सुकुमारतरंनकिञ्चिदस्तीतिमेमतिर्भवति।

या दृष्टाऽस्मीतिपुनर्नदर्शनमुपेतिपुरुषस्य ।।१० इति

विदेहमुक्तिः एतन्नये वास्तविकीमुक्तिरिति कथ्यते। ईश्वरतत्त्वाङ्गीकारविषये सांख्यदर्शने मतद्वयं वर्तते यथा- १. निरीश्वरवादः, २. सेश्वरवादश्च। सूत्रकारः निरीश्वरवादं व्यवस्थापयति। भाष्यकारस्तु सेश्वरवादं समर्थयति। सांख्यदर्शनस्य सत्कार्यवादः दर्शनपरम्परायां महत्त्वपूर्णस्थानंभजते। सत्कार्यवाद इति पदस्यार्थः कार्यमभिव्यक्तेः पूर्वं कारणेसदात्मना अत्यन्तसूक्ष्मरूपेण आसीत्इति। अभिव्यक्त्यनन्तरं प्रकाशस्वरूपमाप्नोति। कार्यकारणयोः अभेदः भेदस्तु व्यावहारिक इति। अमुमर्थं स्पष्टयति इयं कारिका -

कार्यरूपेणनानात्वमभेदः कारणात्मना।

हेमात्मना यथाऽभेदः कुण्डलाद्यात्मनाभिदा।।११ इति।

ईश्वरकृष्णेनपञ्चभिः हेतुभिः सत्कार्यवादः व्यवस्थापितः। यथा -

ISSN 2348-8263

१.असदकरणात्,२.उपादानग्रहणात।३.सर्वसम्भवाभावात्,४.शक्तस्य शक्यकरणात।५.कारणाभावात्

एतेषांमते कार्यं कारणस्य परिणामरूपम्। यथा दधि क्षीरस्य परिणामरूपम्। तिलस्य निष्पीडनेनतैलं जायते न सिकतायाः तस्मात् कार्यं सदित्युच्यते। एवंसमासेन सांख्यदर्शनमुपस्थापितम्।

४. योगदर्शनम् -

जगतिसर्वेमनुष्याः सुखं कामयन्ते, तत्साधनजिज्ञासां च कुर्वन्ति। दुःखलेशमपिन कामयन्ते, तन्निराकरणोपायं च चिन्तयन्ति। दुःखानि सामान्यतः त्रिविधानिभवन्ति। तानि च आध्यात्मिकाधिभौतिकाधिदैविकनाम्ना व्यवह्रियन्ते। एतेषांदुःखानांनिराकरणं लौकिकैरुपायैः सामान्यतः यद्यपि सम्भवतितथापि आत्यन्तिकदुःखनिवृत्त्यर्थं मोक्षमार्गप्रदर्शनार्थं च योगशास्त्रमत्यन्तमुपकरोति। इदं योगदर्शनं सांख्यस्यापरनामधेयं भवति। यद्यपि प्रागेव हिरण्यगर्भादिभिः उपदिष्टमासीत्तथापिमुमुक्षूणामनुग्रहार्थं सुलभरीत्या तत्तत्त्वावगाहनार्थं योगसूत्रं महर्षिपतञ्जलिः व्यरचयत्। इदं योगसूत्रं दर्शनस्याधारभूतम्।

महर्षिपतञ्जलिप्रणीतं योगसूत्रं समाधिसाधनविभूतिकैवल्यनामकं पादचतुष्टयात्मकं भवति। तत्र योगस्य स्वरूपकथनम्, चित्तवृत्तिनिरोधानांवर्णनं, पञ्चवृत्तीनांप्रस्तावनंक्लिष्टाक्लिष्टकथनपुरस्सरंप्रमाणानांस्वरूपवर्णनम्, निरोधोपायानां स्वरूपवर्णनेन सह सम्प्रज्ञातासम्प्रज्ञातसमाधिविशेषयोः वर्णनम्अभिहितम्।

योगशब्दोऽयं युज् धातोः निष्पन्नः सन्चित्तवृत्तिनिरोधाख्यमर्थमवबोधयतीति योगिनः आमनन्ति। अस्मिन्शास्त्रेसंसारः, संसारहेतुः , मोक्षः, मोक्षहेतुश्च इति चत्वारः व्यूहाः भवन्ति। योगाङ्गानि अष्टौ अङ्गीकृतानि। एतेषां सम्यज्ज्ञानं कैवल्यार्थमुपकरोतीति

ISSN 2348-8263

एतेवदन्ति। तानिअष्टौ अङ्गानि एवंसन्ति यथा-"यम-नियम-आसन-प्राणायाम-प्रत्याहार-धारणा-ध्यान-समाधयोऽष्टावङ्गानि१२ इति ।

एतन्नये क्लेशकर्मविपाकादिभि: अपरामृष्ट: पुरुषविशेष: ईश्वर:।पुरुषपदंजीवपरकम्। पुरुषविशेषपदम्ईश्वरपरकम्। स: च ईश्वर: पञ्चक्लेशै: विनिर्मुक्त: पुरुषविशेष इत्युच्यते।(अविद्या-अस्मिता-राग-द्वेष-अभिनिवेशा: पञ्चक्लेशा:)। योगद्वारा जीव: कैवल्यमश्नुते।

५. मीमांसादर्शनम् -

आस्तिकदर्शनपरम्परायां लसत्सुदर्शनेषुमीमांसादर्शनमिदं धर्माख्यतत्त्वप्रतिपादने इतराणिदर्शनानिअतिशेते। अत्र वेदान्तर्गतयज्ञयागादिस्वरूपकर्मकाण्डसम्बद्धानां समन्वयप्रदर्शनद्वारा संस्थापनमेवास्य दर्शनस्य मुख्यमुद्देश्यम्। "कुर्वन्नेवेहकर्माणिजिजीविशेच्छतं समा:१३ इति चास्तिकर्ममार्गप्रदर्शकमिदं वाक्यम्। इदं मीमांसादर्शनंपूर्वोत्तरभेदेनद्विविधम्। कर्मकाण्डतत्त्वप्रतिपादकवेदभाग: पूर्वमीमांसाइति कथ्यते। वेदान्तदर्शनमुत्तरमीमांसेति कीर्त्यते।

दर्शनस्यास्य प्रवर्तक: महर्षि: जैमिनि:। कर्मधर्मस्वरूपयो: प्रतिपादनमेवास्य दर्शनस्य मुख्यप्रतिपाद्यविषय:। अत एव अस्य दर्शनस्य प्रथमंसूत्रंभवति "अथातोधर्मजिज्ञासा १४ प्रमेयसिद्ध्यर्थं मतभेदेनपञ्चषट्प्रमाणानि च अङ्गीकृतानि। तच्च मतद्वयं प्राभाकरभाट्टनाम्नाप्रसिद्धमस्मिन्दर्शने। जैमिनिमुनिप्रणीतंमीमांसासूत्रं दर्शनस्याधार:। मीमांसासूत्रमिदं द्वादशाध्यायैरुपनिबद्धम् । अस्मिन्षष्ठिपादा:(६०) सप्तोत्तरैकशतम्अधिकरणानि (१०७) द्विसहस्रसप्तशतपञ्चचत्वारिंशत् (२७४५)सूत्राणिसन्ति। इदं सूत्रंद्वादशलक्षणीनाम्नाऽपिप्रथितमस्ति।

 ISSN 2348-8263

प्रमेयनिरूपणार्थं प्राभाकरैः पञ्चप्रमाणानिभाट्टैः षट्प्रमाणानि अङ्गीकृतानि। तानि च प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्धिसंज्ञकानि भवन्ति। एवंसंक्षेपेणमीमांसादर्शनमुपस्थापितम्।

६. वेदान्तदर्शनम् -

वेदान्तशब्दस्य बहुधाअर्थाः उपलभ्यन्ते शास्त्रेषु। तत्रवेदान्तोनामउपनिषत्प्रमाणम् । अत्रएवं प्रतीयते यद्वेदान्तः तादृशीविद्याअस्ति यथा वेदस्य अन्तिमध्येयस्य ज्ञानं लभ्यते। यथा वेदाः ब्रह्मात्मविषयाः। अपि च वेदान्तोनाम - जीवब्रह्माभेदबोधकं वाक्यमिति, रहस्यविद्या इति, उपनिषदिति, ब्रह्मविद्याप्रतिपादकंशास्त्रमिति ब्रह्मसूत्रस्य प्रथमसूत्रादेवावगम्यते यथा - "अथातो ब्रह्मजिज्ञासा"१५ । वेदान्तशब्दार्थः उपनिषद् इत्यर्थमुपष्टम्भयति। कठोपनिषदि श्रीमत्शङ्करभगवत्पादैः भाष्ये एवमुल्लिखितम्- "सदेर्धातोर्विशरणगत्यवसादनार्थस्योपनिपूर्वस्य क्विप्प्रत्ययान्तस्य रूपमुपनिषद्"१६ इति। उपनिषच्छब्देन च व्याचिख्याषितग्रन्थ-प्रतिपाद्यावेद्यावस्तुविषया विद्योच्यते।

वेदान्तदर्शनमिदं ज्ञानप्राधान्यम्। आदौसत्त्वशुद्ध्यर्थं नित्यनैमित्तिकादि-कर्माण्यनुष्ठाय ज्ञानेअधिकृतोभवतिप्राणभृत्। उपनिषद्, श्रीमद्भगवद्गीता, ब्रह्मसूत्राणि इत्येतत् त्रयं प्रस्थानत्रयी नाम्नावेदान्तेप्रथितम्। भूमिभेदं सम्प्राप्य यथा एवैकासरित्बहुधाविभजतेतथैवएकमेवेदंवेदान्तदर्शनंबहून्शुद्धान्तःकारणान् आचार्यान् सम्प्राप्य अनेकधाऽभवत्।

तच्च अद्वैत-विशिष्टाद्वैत-शुद्धाद्वैत-द्वैत-द्वैताद्वैताचिन्त्यभेदाभेदनाम्ना प्रथितम्। ब्रह्म-जीव-जगत्-परस्परसम्बन्धभेदएवसिद्धान्तभेदेहेतुः। वेदान्तदर्शनस्य मूलं भगवद्बादरायणविरचितं ब्रह्मसूत्रम् ।

ISSN 2348-8263

अद्वैतवेदान्तदर्शनम् -

अद्वैतवेदान्तदर्शनमिदमतिप्राचीनम्। अद्वैतवेदान्तस्य विशिष्टव्याख्यातारः प्रचारकाश्च आचार्यशङ्करभगवत्पादाः। यद्यपि अद्वैतवेदान्तेअनेके अद्वैताचार्याः विलसन्ति, तथापिअद्यावधिनकोऽपि आचार्यशङ्करस्य तुल्यतां प्राप्नोतिइतिविशेषः। अत एवअद्वैतवेदान्तदर्शनं शाङ्करवेदान्तनाम्ना अद्यापिप्रसिद्धम्।

यद्यपि वेदान्तदर्शनम्अनेकैः आचार्यैः अनेकधा व्याख्यायितम्। तत्रोक्तस्य विषयजातस्य प्रपञ्चनमेवग्रन्थान्तरेषु परिदृश्यते। तत्रापिसन्दिग्धानामर्थानां न्यायपूर्वकं निर्णयेन वेदविरुद्धमतनिरासेन ज्ञानतत्त्वप्रतिपादनेनसगुणनिर्गुणफलप्रदर्शनेन च भगवताबादरायणेन प्रणीतानांब्रह्मसूत्राणां श्रीमच्छङ्करभगवत्पादाचार्यैः प्रसन्नगम्भीरं भाष्यं प्रणीतम्, यदवलोक्य भगवान् बादरायण एवनितरांप्रसन्नस्वान्तोऽभूदिति श्रीमच्छङ्कर-दिग्विजयादितोऽवगम्यते। अत एव भारतीयचिन्तनशास्त्रस्य जाज्वल्यमानं हीरकसदृशंप्रदीपवच्चेति शाङ्करमतमद्वैतमेव सर्वैरङ्गीक्रियते। अस्य च अद्वैतवादस्य दिव्यज्योतिः मानवहृदयं प्रकाशयितुं सामर्थ्यशालिनी वर्तते इत्यत्र नास्तिलेशोऽपि संशयः। तत्त्वसम्बद्धं यावदपि चिन्तनंभारतेप्रसारितम्, तस्यान्तिमं निमज्जनमद्वैतसागरस्य अन्तःस्थलमेवभवति। मानवस्य दर्शनसम्बद्धप्रवृत्तिः, आचारः,व्यवहारः, उक्तयः, सूक्तयः तथा अन्येषांचिन्तनानांसारांशाः वेदान्तेएवविशिष्टनिधिरूपेणविद्यन्ते।

भारतीयदर्शनानि अद्वैतवेदान्तदर्शनञ्च -

भारतीयदर्शनम् अद्वैतवेदान्तदर्शनञ्चइति पदद्वयम् एकम् अपरस्य सौन्दर्यं द्विगुणितंकरोति। अन्यस्य शक्तिञ्च वर्द्धयति। अद्वैतवेदान्तस्य गौरवम्अत्रैवनिहितमस्ति यच्च जगतिप्रसिद्धेषु भारतीयदर्शनेषुएवंविशिष्टंदर्शनविशेषं भवति। अपि च भारतीयदर्शनानाम्




ISSN 2348-8263

ओजः(तेजः) अभिवर्द्धयितुं शक्तिंप्रदातुञ्चप्रमुखं सहायकमद्वैतवेदान्तदर्शनं भवति। किञ्च न्याय-वैशेषिक-सांख्य-योग-पूर्वमीमांसा-उत्तरमीमांसादीनां दर्शनानां रूपलावण्यं विकासयति अद्वैतवेदान्तएव। अदैतवेदान्तंविना भारतीयं दर्शनमपूर्णमेवभवति। समग्रेविश्वे भारतीयं दर्शनंसर्वोत्कृष्टस्थानेप्रतिष्ठितंकर्तुं सर्वाधिकं श्रेयः अद्वैतवेदान्तस्यैव। अतः भारतीयदर्शनेषुअद्वैतवेदान्तंस्वक्षेत्रेसर्वोत्कृष्टस्थाने प्रतिष्ठातुंस्वमहिम्निअनुप्राणितंभवति। आध्यात्मिकचिन्तनस्य प्राबल्यं, सामान्यजनानां जीवने अनुस्यूतिः, धर्मेणसार्वकबलिष्ठसम्पर्कः, यथार्थता, व्यावहारिकता, प्राचीनता, धाराप्रवाहस्य अनवच्छिन्नता, समीक्षात्मकता, विवेचनात्मकता, कर्मस्वीकृतिः तथा च विभिन्नतासुएकता इत्यादिषुविविधेषुविषयेषुसुसम्पन्नम्अद्वैतदर्शनंविश्ववन्द्यरूपं सम्प्राप्य शिरोमणिदर्शनम्इति रूपेणप्रसिद्धंलभते। न्यायवैशेषिकादिषुदर्शनेषुअपिसर्वाधिकाकर्षणशक्तिः अद्वैतदर्शनेएव दरीदृश्यते। किञ्च यदा वेदान्तदर्शनस्य चर्चा क्रियते, तदा अद्वैतवादस्य मञ्जुलमूर्तिः नेत्रयोः समक्षंसाकाररूपेण समायाति। किमर्थञ्चेत् भारतीयदर्शनेषुसर्वप्रसिद्धाविचारपद्धतिः वेदान्तदर्शनस्य एव। वेदान्तस्य विभिन्नेषु सम्प्रदायेषुविशिष्टः उत्कृष्टः च सम्प्रदायः अद्वैतवादः। अतः वक्तुं शक्यते भारतीयदर्शनेषु वेदान्तस्य प्रभाविष्णुस्वरूपा निश्चयेन दर्शनीया। एवं भारतीयदर्शनम् अद्वैतदर्शनञ्चपारम्परिकरूपेण पूर्णतासम्पूर्णतयोः द्योतकेभवतः।

(क) जीवनमद्वैतवेदान्तदर्शनञ्च -

सर्वसाधारणजनजीवनेन सह विशिष्टंचिन्तनंभावना च अद्वैतवेदान्तस्य श्रेष्ठत्वं प्रतिपादयति। अद्वैतवेदान्तदर्शनम्अमुंसिद्धान्तं बोधयति-जीवः इहलोकेएव अतिशयानन्दानुभूतिं प्राप्नोति। जीवन्मुक्तेः निर्देशः तथा जीवन्मुक्तस्य स्वच्छन्दंविचरणम् अद्वैतवेदान्तस्य जीवने अनुस्यूतेः अनुप्रविष्टेः च द्योतकंभवति।

(ख)धर्मःअद्वैतवेदान्तदर्शनञ्च-

भारतीयदर्शनेषु धर्मतत्त्वस्य स्वतन्त्रंस्थानंभवति। तत्रविशिष्ट-शुद्धाद्वैत-द्वैत-निर्गुण-सगुण-अद्वैतादीनांसर्वेषांधर्माणांसमावेशः वेदान्तेभवति। अद्वैतवेदान्तदर्शनंसर्वान्मनुष्यान् ब्रह्मणः अंशरूपेणमनुते। यदा सर्वेषुप्राणिषु एकस्य आत्मतत्त्वस्य अस्तित्वं मन्यते तदा विरोधस्य कल्पनास्वतः एवदूरीभवति। अपि च धर्मः एकस्य सम्प्रदायस्य द्योतकःनास्तिअपि तु एका आध्यात्मिका अनुभूतिः वर्त्तते। अद्वैतवेदान्तदर्शनम्एकम् आध्यात्मिकं दर्शनम्। सर्वेषांधर्माणामत्र समन्वयकारणात् अद्वैतमेकमपूर्वं दर्शनंसञ्जातम्।

(ग)नैतिकताचारौअद्वैतवेदान्तदर्शनञ्च -

अद्वैतवेदान्तस्य आचारपक्षोऽपिसबलः एव। यद्यपि नैतिकता आचारश्च अत्रसर्वोपरिन मन्येते। कारणंमोक्षलाभः अस्य दर्शनस्य परमं लक्ष्यम्। तथापि ब्रह्मतत्त्वस्य साक्षात्कारार्थं नैतिकमाचारश्च अपेक्षेतेएव। अनयोः समावेशेन इदं दर्शनंपूर्णदर्शनंसञ्जातम्। आत्मसाक्षात्कारार्थं चित्तस्य विशुद्धिः तथानिर्मलताअपेक्षतेएवइतिवेदान्तो मन्यते। अतः ब्रंह्मजिज्ञासार्थं साधनचतुष्टयसम्पन्नः आवश्यकः इति ब्रह्मसूत्रस्य प्रथमसूत्रेएववर्णितम्।

किञ्च आचारस्य मोक्षसाधनता परम्परया मन्यते। योगः तथा तस्य अष्टाङ्गानि अपि मोक्षस्य साधनं ज्ञानस्य साधनञ्च स्वीक्रियेते। अतः एवअद्वैतदर्शनम् आचारपक्षस्य प्राबल्यं स्पष्टरूपेणउद्घोषयति।

(घ)भ्रातृत्वैक्यभावः अद्वैतवेदान्तदर्शनञ्च -

रागद्वैषादिभावनानां परित्यागः तथासर्वेषु एकस्याः सत्तायाः अस्तित्वंदर्शनंकुर्वत्अद्वैतदर्शनंसर्वप्राणिषुमूलतः निहितमैक्यम् उद्घोषयति। इत्थमैक्यभावनां जागरणंकर्तुं सुन्दरः प्रयासः अस्मिन्दर्शनेभवति। प्राणिनांकर्णद्वारे यथैव

 ISSN 2348-8263

वेदान्तदर्शनममुंध्वनिं वादयति यत् सामाजिवैकतायां विश्वशान्तौ च परमः उपायः आध्यात्मिकता। अद्वैतस्य घोषणाभवति- अद्वैतभावनैवमानवजीवनं सुखस्य उत्कृष्टमार्गं प्रापयति। सर्वसमतायाः महान्सन्देशः अद्वैतवेदान्तेएवसमाविष्टोभवति।

पादटिप्पणी-

१. वि. प्र. सं - पृ. ५,
२. न्या. सू. वा. भा. - १/१/१,
३. म. सं. - १२/१०६,
४. न्या. सू - १/१/३
५. त. सं. - पृ. ५२,५३
६. वै.सू. - १/१/४
७. सां. का. - ३
८. सां. का. - १(गौडपादभाष्यम्)
९. सां. का. - ५७
१०. सां. का. - ६१
११. सां. का. - ६८
१२. पात. यो. द. -२/२९
१३. ई. उ. - २
१४. ब्र. सू. - १/१/१/१
१५. मी. द. - १/१/१/१
१६. क. उ .शा. भा. - पृ. १९६

## ब्रह्मसूत्रानुसारंशूद्राणांब्रह्मविद्याधिकारविमर्शः

बसुन्धरापाणिग्राही

शिक्षाशास्त्री, प्रथमवर्षम्

कुरुक्षेत्रविश्वविद्यालयः, हरियाणा

*सारांशः*

 ISSN 2348-8263

*भारतीयसमाजः अधिकारभेदेन कार्यं करोति। परन्तुउन्नतिःसर्वेषां यथा स्यात् तथैव नियमः भवति। भारतीयसंस्कृतौवास्तविकोन्नतिःनाम अध्यात्मोन्नतिः। तदर्थं अधिकारिभेदेनमार्गः सुनिश्चितः वर्तते। वर्णचतुष्टये सेवाकर्माधिकारिणः शूद्रस्य ब्रह्मविद्यायामधिकारः वर्ततेनवाइति संशयः। तत्र प्रसङ्गवशात् ब्रह्मसूत्रस्य प्रथमाध्याये अस्मिन्विषये चर्चाप्रचलति। तद्विषये आचार्याणां मतानिआलोचितानिवर्तन्ते। कैश्चित् शूद्रस्य अधिकारित्वंन स्वीक्रियते कैश्चित्तु अनुमन्यते। शूद्रस्य अधिकारःवर्तते चेदपि वेदाध्ययनमुखेन न, अपि तु पुराणेतिहासमुखेनवर्तते।*

***कुञ्चिशब्दाः***

*जातिः, वर्णः, शूद्रः, गुणः, कर्म, उपनयनसंस्कारः, पाकयज्ञः, संवर्गविद्या, श्राद्धकर्म, विद्याधिकारः*

भारतीयसमाजस्य आधारभूताभवति सुव्यवस्थिता वर्णव्यवस्था। इयमाधारीकृत्य भारतीयसमाजः पुरुषार्थं प्रति प्रयतते। ब्राह्मणः क्षत्रियः वैश्यः शूद्रश्चेति चत्वारःवर्णाः। भारतीयसंस्कृतेःप्राणाःभवन्ति चत्वारःवेदाः। वेदोनामअक्षयज्ञानभाण्डागारः उच्यते। तत्रपुनःसारभूताभवतिउपनिषत्। उपनिषदः अन्यत् नाम रहस्यविद्याति। रहस्यविद्यायाः हृदयभागं सुबोधाय बादरायणः ब्रह्मसूत्राणि प्रणिनाय। ब्रह्मसूत्राणि अध्यायचतुष्टयेषुविभक्तानि। समन्वयाध्यायः अविरोधाध्यायः साधनाध्यायः फलाध्यायश्चेति चत्वारः अध्यायाः। समन्वयाध्याये तृतीयपादे अपशूद्राधिकरणे ब्रह्मविद्यायां शूद्रस्य अधिकारःअस्तिनास्तिवा प्रसङ्गवशात् आलोच्यते। आधुनिकयुगे अपिभारतेजातिप्रथाप्रचलति। तत्रशूद्राणांकास्थितिरितिभिन्नाकथा। मनुष्यजन्मनः परमप्रयोजनं तु संसारचक्रात्मुक्तिःएव। तच्च विद्यया एवभवति। अतःतत्र विद्यायामधिकारः शूद्रस्य वर्ततेनवाइति भाष्यकाराणां मतानुसारमिहकिञ्चित् आलोच्यते।

**विचारसंगतिः**[३७]

शूद्रेअपि सामर्थ्यस्य च संभवात्विद्यतेअधिकारः विद्यायाम्। शूद्रः विद्यायामनवक्लृप्तइतिनिषेधःअपिकुत्रापिन दृश्यते। किञ्च अग्निकार्येषु शूद्रस्य अधिकारःनास्ति चेदपि विद्यायामधिकारः नास्तीत्यपि वक्तुंन शक्यते, अग्निरहितस्य

[37]अपशूद्राधिकरणस्य शाङ्करभाष्ये प्रस्तुतंपूर्वपक्षीमतमिहविचारसंगतित्वेन उपस्थाप्यते।

ISSN 2348-8263

विद्यानधिकारइति नियमाभावात्। " अह हारेत्वाशूद्रतवैवगोभिस्तु" इति संवर्गविद्यायां श्रुतिलिङ्गादापि गम्यते शूद्राधिकारः। तथा च शूद्रकुलेविदूरादीनां ज्ञानीनांजन्म शूद्रस्य विद्याधिकारीत्वं ज्ञापयति। अतः विद्यायां विद्यतेशूद्राधिकारः।

## शङ्कराचार्यमतम्

यथा शूद्रस्य यागे अनधिकारसूचकत्वेन वाक्यानि लभ्यन्ते तथा विद्यायामनधिकारसूचकानि वाक्यानि नैव उपलभ्यन्ते चेदपिशूद्रो यज्ञे अनवक्लृप्तःइति तन्न्यायपूर्वकत्वाद्विद्यायाप्यनवक्लृप्तं द्योतयति, न्यायस्य साधारणत्वात्। संवर्गविद्यायां शूद्रशब्दःन लिङ्गं न्यायाभावात्। संवर्गविद्यायां शूद्राधिकारः स्वीक्रियते चेदपितेनसर्वासुविद्यासुअधिकारःइतिन सिध्यति। अपितुशूद्रशब्दःअर्थवादेपठितत्वात्नक्वचिदपिअधिकारेतिवक्तुं शक्यते। जानश्रूतिःनजातिशूद्रः। अपि तु प्रकरणात् तस्य क्षत्रियत्वं सिध्यति। ब्रह्मविद्यार्थं संस्कारः अपेक्ष्यते एव। शूद्रस्य संस्काराभावात्नअधिकारी। सत्यकामस्य सत्यवचनेनापि तस्य शूद्रत्वाभावः गम्यते। अतः शूद्रस्य नअधिकारः विद्यायाम्। स्मृतिशास्त्रेषु शूद्रस्य वेदश्रवणाध्ययनादिकं निषिध्यते। उच्यते च शूद्रःसाक्षात्गतिशीलःश्मशानमेव। परन्तु विदुरादयः पूर्वकर्मसंस्कारवशात् ज्ञानंप्राप्तवन्तः। अतःतेषांकृतेफलंप्राप्तिनिषेधःन युज्यते। यतो हि ज्ञानस्यैकान्तिकफलत्वात्। श्रावयेच्चतुरोवर्णान्इतिवचनात्इतिहासपुराणमुखेनविद्यतेअधिकारःसर्वेषाम्। किन्तुवेदपूर्वकस्तु नास्त्यधिकारः शूद्राणाम्।[३८]

## रामानुजाचार्यमतम्

सामर्थ्याभावात् शूद्राणां विद्यायामधिकारः नास्ति। ब्रह्मस्वरूपोतदुपासनप्रकारमजानतःतथा तदङ्गभूतवेदपाठे यागे च येषाम्अनधिकारः, तेषां सामर्थ्याभावः एव गम्यते। वेदाध्ययनाभावैव सामर्थ्याभावः। वैदिकज्ञानाभावात्एवशूद्रो ब्रह्मोपासनायामनधिकारी। इतिहासपुराणेषु वेदमतानुकूलतया एव उपायानां विवेचनभवति, नहि स्वच्छन्दतया। किञ्च शूद्राय यत् उपदेशःदत्तःपुराणेतिहासेषुतत् पापक्षयफलप्राप्तिनिमित्तिकृत्य ए० ान तु उपासनार्थम्। विदुरादयः प्रारब्धवशात् शूद्रयोनिगताः, वस्तुगत्या ते जन्मसिद्धःआसन्। पुनश्च यत्र ब्रह्मविद्योपदेशेषूपनयनसंस्कारः परामृश्यते तत्रैव तस्य

---
[38] ब्रह्मसूत्रं शाङ्करभाष्यम् १-३-३८

ISSN 2348-8263

उपनयनादिसंस्कारभाव: अभिलप्यते, "नशूद्रोपातकंकिञ्चित्नसंस्कारमर्हति" इति। शूद्रस्य वेदश्रवणाध्ययनादिकं निषिध्यते शास्त्रै:। किञ्च य: शूद्र:वेदमधीतेस:दण्डभाक्भवति। उपासनशास्त्रञ्च उपनयनादिसंस्कृतंसंस्कृताधीतं विवेकयुक्तं साधकंप्रति उपायं वेदयति। तादृशं ज्ञानंगुरो:सकाशात् प्राप्य साधक:पुरुषार्थं प्रति यतते। एवंविध: योग्यताभावात् शूद्र: ब्रह्मोपासनायामनधिकारीति सिध्यति।[३९]

### भास्कराचार्यमतम्

विद्यामनोवृत्तिमात्रसाध्या। अत:शूद्र:अपिअधिकारीइति शङ्का निराक्रियते। जानश्रूते:कृते प्रयुक्त: शूद्रशब्द:नजातिपरक:, अपि तु मत्सरशोकयुक्त: सूच्यते। अत: लिङ्गात् अपिशूद्र: विद्यायामधिकारीति वक्तुंन शक्यते। शूद्रश्चतुर्थो वर्णएकजातिर्न च संस्कारमर्हतीतिश्रुते:संस्काराभावात्न स अधिकारी। सर्वतोभावेनश्रुतिषुस्मृतिषु च संस्काराभावात्न युज्यते अधिकारित्वं शूद्रस्येति।

### बल्लभाचार्यमतम्

जानश्रुते:कृतेशूद्रशब्द:नजातिशूद्रवाची। अपि तु मत्सरयुक्तत्वमत्र नाधिकारीतितथासम्बोधनम्। किञ्चजानश्रुते: क्षत्रियत्वोपगमनेन जानश्रुत्युदाहरणेन शूद्रस्य अधिकार:न सिध्यति। पुनरपिसर्वत्र उपनयनसंस्कारपामर्शात् शूद्रस्य क्वचिदपि ब्रह्मविद्यायामधिकार: नास्ति। उपनयनपुर:सरमेव वेदाध्ययनं भवति। शूद्रस्य संस्काराभावाभिलापात्नअधिकार: विद्यायामिति। सत्यकामस्य सत्यवचनेन वर्णत्वं शूद्राभावश्च गम्येते। तेन च सिध्यति शूद्रस्य अनधिकार:। अपि च वेदश्रवणमध्ययनर्थज्ञानमपि अस्य निषिद्धम्। अत:अधिकारचिन्ताएवनोपपद्यते। वेदाक्षरविचारेणशूद्र:पततितत्क्षणादिति शूद्रयोनिगतानां महतामधिकार: भवत्येव। तत्रापिनकर्मजातिशूद्राणाम्। अत:वैदिकेक्वचिदपिनशूद्राधिकार:इति।[४०]

---

[39] श्रीभाष्यम् १-३-३८

[40] अणुभाष्यम् १-३-३८

ISSN 2348-8263

**शिवार्कमणिदीपिकाकारमतम्**[४१]

ननुविद्याप्रकरणेउक्तं यत् वेदाध्ययनार्थमुपनयनसंस्कार: अपेक्ष्यते एवैति। तत्रैदं विचारणीयं यत् त्रैवर्णिकानामनुपनीतानांश्राद्धकर्मणिवेदोच्चारणंकथंभवतीति। अत:शूद्राणामपिसर्वतोभावेन वेदाध्ययननिषेध:नभवतु। अपि च ज्ञानभागेअधिकार:भवतु। एवं शङ्का यथा न स्यात् तदर्थम्अन्तिमं सूत्रमवतायति श्रवणाध्ययनार्थप्रतिषेधातिति। अर्थात्श्रुतिस्मृतिषु शूद्रस्य अनधिकार:एवसूचितोवर्तते। यद्यपि आचार्येष शूद्रस्य पुराणेतिहासमुखेनअधिकार:अस्तिवानास्तीतिनालोचितंतथापिपारिशेषन्यायात् सिध्यति शूद्रस्याधिकार: पुराणादिमुखेन।

**जातिवर्णयो: भेद:**

जन्प्रादुर्भावेइतिधातुत:क्तिन् प्रत्यये कृतेजातिरितिपदंनिष्पद्यते। जन्मनाजाति: निर्धार्यते। कश्चन यस्मिन् कुले जायते तदेव तस्य जाति:भवति। यथा ब्राह्मणकुले जातश्चेत् ब्राह्मणजाति:, क्षत्रियकुले चेत् क्षत्रियजाति: भवति।

वर्ण:इतिपदं वृञ्-वरणेइतिधातो:घञ् प्रत्यये कृतेसतिभवति। "चातुर्वण्यं मया सृष्टंगुणकर्मविभागश:[४२]" इतिभगवदवचनात्गुणत:कर्मत: च वर्ण: निर्धायते। गुणा:सत्त्वरजस्तमांसि। तत्र सात्त्विकस्य सत्त्वप्रधानस्य ब्राह्मणस्य शमोदमस्तप: इत्यादीनि कर्माणि। सत्त्वोपर्जनरज:प्रधान:भवति क्षत्रिय:। शौर्यतेज:प्रभृतीनि च तस्य क्षत्रीयस्य कर्माणिभवन्ति। तम-उपसर्जनरज:प्रधानोभवति वैश्य। कृष्यादीनि कर्माणि च तस्य प्रधानकर्मभवति। रज-उपसर्जनतम:प्रधान:भवतिशूद्र:। शुश्रूषैवमूलकर्मभवति शूद्रस्य। कारुकार्यमयकर्मअपि शूद्रस्य भवति। एव कश्चित ब्राह्मणकुले जायते चेदपि शूद्रगुणकर्मयुक्तो भवतितदा तस्य शूद्रवर्ण:भवति। परन्तु जात्या तु स ब्राह्मणएव।

श्रुतिस्मृतिषु चत्वारोवर्णा: समानतया आलोचिता:वर्तन्ते। शास्त्राणंकुत्रापिपक्षपातबुद्धि:नभवति। मातृवत्सर्वत्र समानदृष्टिं प्रसरयति शास्त्रम्। यद्यपि क्वचिदुच्यते यत् मुखात्उत्पन्नत्वात्ब्राह्मण:श्रेष्ठ:पादात् सृष्टत्वात्शूद्र:हीन:इति। तत्र शूद्रस्य हीनत्वप्रतिपादनेन शास्त्रस्य रुचि:। अपितु तात्पर्यं भवतिशूद्र:अपिस्वतमोगुणं त्यक्त्वा सत्त्वंप्रति प्रयतेत।

[41] शिवार्कमणिदीपिकाभवति शैवाद्वैतसम्प्रदायस्य श्रीकण्ठभाष्योपरि भाष्यम्। तत्कर्ता च अप्पय्यदीक्षित:।
[42] भगवद्गीता ४-१३

 ISSN 2348-8263

तस्मात्विवेकानन्दःउवाच यत् शूद्रान्अपिसंस्कारेणब्राह्मणः कारणीयः इति।[43] किञ्च संप्रदाये क्वचित् शूद्रस्य ... प्रतिपादयितुम् उच्यते यत् शूद्रस्य सृष्टिःभवतिपुरुषस्य पादात्। पादश्च सकलशरीरस्य सेवाधर्मं श्रेष्ठधर्ममिति प्रतिपादयति, जीवे दया इति वाक्यं निराकृत्य जीवेसेवाइति कथयति। तादृशसेवाकार्यस्य एकमात्रअधिकारीभवतिशूद्रः। संस्काराभावात् शूद्रस्य वेदाध्ययने अधिकारःनास्ति चेदपिवेदार्थज्ञापकेतिहासपुराणमुखेनवेदार्थचिन्तनंकर्तुंशक्नोति। अतः शङ्कराचार्यैः च उक्तंविद्यतेअधिकारः शूद्रस्य विद्यायां पुराणेतिहासमुखेनइतितत् सत्यम्। तत्रभगवतःवचनमपिप्रमाणंभवति यत्

"मांहिपार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः

स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परांगतिम्।[44]"

अर्थात् ये खलु पापयोनिसम्भूताः तथानारी वैश्यः शूद्रश्चापि भगवतःशरणाश्रितंभवितुमर्हति। अनेनसिद्धंभवति यत् शूद्रस्य ब्रह्मविद्याधिकारःवर्ततेइतिशम्।

सहायकग्रन्थसूची


१. श्रीभाष्यम्(प्रथमभाग), रामनुजाचार्य, २०००, चौखम्बासंस्कृतप्रतिष्ठान, दिल्ली।

२. ब्रह्मसूत्रशाङ्करभाष्यम्(एकादशटीकासंयुक्तम्), १९९९, प्रो. योगेश्वरदत्त शर्मा(पाराशरः), नागपब्लिशर्स, दिल्ली।

३. चन्दमिहिर, अष्टादशस्मृति(भाषाटीकासहित), २००५, राष्ट्रिय संस्कृतसंस्थान।

४. भास्कराचार्यः, २००६, ब्रह्मसूत्रभाष्यम्, म.म. विन्ध्येश्वरीप्रसाद द्विवेदी, राष्ट्रिय संस्कृतसंस्थान।

५. वल्लभाचार्यः, २००२, श्रीमदणुभाष्यम् (प्रथमोभागः), रत्नगोपालभट्ट, कृष्णदासअकादेमि, वाराणसी।

६. उपाध्यायः रामजी, २००६, भारतस्य सांस्कृतिकनिधि, चौखम्बविद्याभवन, वाराणसी।

७. उपाध्यायः रामजी, २००९, भारतीयसंस्कृतिसौरभम्, चौखम्बासुरभारतीप्रकाशन, वाराणसी।

८. श्रीमद्भागद्गीता (शाङ्करभाष्यसहित), गीताप्रेसगोरखपुर।


***वेदान्तशास्त्रेअधिकारीविमर्शः***

---

[43] विवेकानन्दवाणी ओ रचना-बङ्गला

[44] श्रीमद्भगवद्गीता ९-३२

 ISSN 2348-8263

शारदापण्डा

शिक्षाशास्त्री

यादवपुरविश्वविद्यालयःपश्चिमवंगः ,

कस्मिंश्चित्शास्त्रेप्रवेशात्प्राक्तस्यशास्त्रस्यविषये सम्यक् ज्ञानम्आवश्यकंभवति। तस्यशास्त्रस्यआपाततयाज्ञानार्थम्अनुबन्धचतुष्टयम्आवश्यकम्। ग्रन्थस्यप्रारम्भे यथा आस्तिकाःमङ्गलाचरणम्नियततयाआचरन्तितथैवअनुबन्धानाम् अपि उल्लेखःकर्तव्यः। अनुबन्धैःइदंज्ञायतेयत्शास्त्रम्इदंपाठकस्यउपयुक्तं न वा। शास्त्रस्यकः विषयः। शास्त्रेण सह विषयस्यकःसम्बन्धः। अन्तिमं च इदंशास्त्रंपठित्वाकोलाभोभवति। वस्तुतः अनुबन्धावाचकाभवन्ति। शास्त्रभेदेनअनुबन्धस्यवाच्याः अपि भिद्यन्ते। वेदान्तशास्त्रस्यअनुबन्धवषये आलोचना भवति।एतेषांप्रश्नानामुत्तरमेवअनुबन्धाः। अधिकारी, विषयः, सम्बन्धः, प्रयोजनम्- इति चत्वारःअनुबन्धाः। "अनु स्वज्ञानात्अनन्तरंबध्नन्तिशास्त्रेग्रन्थेवाआसज्जयन्तिप्रवर्तयन्ति ये तेअनुबन्धाः" इति अनुबन्धशब्दस्यव्युत्पत्तिः। अतः अनुबन्धानांज्ञानात्अनन्तरम्एवकस्मिंश्चित्शास्त्रेपुरुषस्यप्रवृत्तिःसम्भवति। यदि शास्त्रादौअनुबन्धानाम्उल्लेखो न भवतितर्हिशास्त्रे प्रवेश एव न सम्भवति। तथा हि-

"ज्ञातार्थंज्ञातसम्बन्धंश्रोतुं श्रोता प्रवर्तते।
ग्रन्थादोतेनवक्तव्यःसम्बन्धःसप्रयोजनः॥"[45]

श्रोता ज्ञाता अर्थंसम्बन्धं च ज्ञात्वाशास्त्रेप्रवर्तते। अतः शास्त्रस्यआदौसम्बन्धादीनाम् उल्लेख आवश्यक इति श्लोकार्थः।

प्रकरणग्रन्थः नाम किम् इति चेत्उच्यते-

"शास्त्रैकदेशसम्बन्धंशास्त्रकार्यान्तरेस्थितम्।
आहुःप्रकरणं नाम ग्रन्थभेदंविपश्चितः॥"[46]

- <u>अधिकारी</u> - वेदान्तसारेवेदान्तशास्त्रस्यअधिकारिणःस्वरूपम्उच्यते-

45

46

 ISSN 2348-8263

"अधिकारी

तुविधिवदधीतवेदवेदाङ्गत्वेनआपाततःअधिगताखिलवेदार्थःअस्मिन्जन्मनिजन्मान्तरेवाकाम्यनिषिद्धवर्जनपुरःसरंनित्यनैमित्तिक प्रायश्चित्तोपासनानुष्ठानेननिर्गतनिखिलकल्मषतयानितान्तनिर्मलस्वान्तःसाधनचतुष्टयसम्पन्नःप्रमाता"इति।

प्रमातातु अधिकारी इति अन्वयः। तुशब्देनवेदान्ताधिकारीअन्यस्मात्अधिकारिणःविशिष्टगुणसम्पन्नः इति उक्तोभवति। प्रमाताएव अधिकारी। अन्यत्सर्वंप्रमातुःविशेषणम्। प्रमाताशब्दस्यआक्षरिकार्थःज्ञानंलभमानःपुरुषः। "प्रमातृशब्दःसदाचारप्रयुक्तब्राह्मणादिपरः"[47]। अर्थात् वेदाध्ययनादिसदाचारैःयुक्तोब्राह्मणःप्रमाताभवति। परन्तु तथा स्वीकारे स्त्री-शुद्रादीनांयेषांवेदाध्ययनेअधिकारोनास्ति, तेषांवेदान्तश्रवणे अपि अधिकारस्यनिषेधोभवति। "लौकिकवैदिकव्यवहारेषुअभ्रान्तः जीव एवप्रमाता"[48]। अर्थात् यःपुरुषःज्ञानसहितंलौकिकंवैदिकं च कर्म सुष्ठुसम्पादयतिसःप्रमाताभवति। प्रमाताशब्देनसर्वेषांजीवानांग्रहणं न सम्भवति। सर्वेजीवाःसर्वंकार्यंयथायथंसम्पादयितुं न शक्नुवन्ति। यस्ययत्रअधिकारोनास्ति स यदि तत् कार्यंकरोतितर्हिप्रमादोभवितुम्अर्हति। प्रमाताशब्देनसर्वेषांग्रहणंभवतिचेत्येषांवेदान्तेअधिकारोनास्तितेषाम् अपि ग्रहणंभवति। कीदृशोगुणवान्प्रमाता इति क्रमेणप्रतिपादितोभवति। अधिकारीलक्षणेउक्तं"साधनचतुष्टयसम्पन्नःप्रमाता अधिकारी" इति। चतुर्विधःसाधनोविद्यते, तादृशःसाधनवान्प्रमातासः अधिकारी। प्रमाता तदा एवसाधनचतुष्टयवान्भवति यदा तस्यअन्तःकरणंनितान्तनिर्मलंभवति। मनः तदा एवनिर्मलंभवति यदा निःशेषरूपेणकल्मषाःमलानिमनसःनिर्गतानिभवन्ति। मलकारणात्एवमनुष्याःनित्यं वस्तु अनित्यं वस्तु च बोद्धुं न शक्नुवन्ति, संसारेबद्धाःभवन्ति, सद्गुणानांविकाशो न भवति। अतः मनसःमलनिष्काशनम्अत्यावश्यकम्। मलनिष्काशनं च सम्भवतिकाम्यंनिषिद्धम् इति द्विविधं कर्म वर्जयित्वानित्यंनैमित्तिकंप्रायश्चित्तम्उपासनं च इति चतुर्विधकर्मणाम्अनुष्ठानेन। एतेषाम्आचरणंतदैवसम्भवति यदा प्रमाताऋक्-साम-यजु-रथर्वाणांचतुर्णांवेदानाम्अर्थंसामान्यतयाजानाति। वेदानाम्अर्थज्ञानंवेदाङ्गैःएवसम्भवति। व्याकरणं, निरुक्तं, ज्योतिषः, शिक्षा, कल्पसूत्रम्छन्दशास्त्रं च इति षड्वेदाङ्गानि। षड्विधैःवेदाङ्गैःएववेदानां सम्यक् अर्थज्ञानंसम्भवति, अन्यथा न भवति। अतः वेदानाम्अर्थस्यपरिज्ञानायविधिपूर्वकंषड्वेदाङ्गसहितंवेदाध्ययनम्आवश्यकम्। अतःलक्षणे"विधिवदधितवेदवेदाङ्गत्वेन" इति उक्तम्।

---

47

48

ISSN 2348-8263

अत्रप्रश्नोभवतियत्वेदेषुएववेदान्तस्यअन्तर्भावः। यदि वेदाङ्गसहितंविधिम्अनुसृत्यवेदपाठोभवतितर्हिप्रमातावेदपाठकालेएववेदान्ततत्त्वंजानाति। तस्मात्पृथक्तयावेदान्तशास्त्रस्यज्ञानाय योग्यता न अर्जनीया। अस्यप्रश्नस्यसमाधानायलक्षणे"आपाततः" इति पदस्यप्रयोगः। आपाततःइत्यस्यप्राथमिकतयाइत्यर्थः। यःप्राथमिकतयावेदार्थंजानाति परन्तु वेदान्ततत्त्वं न जानातितादृशःप्रमाताअत्र अधिकारी।

"प्रयत्नाद्यतमानस्तु योगी संशुद्धिकिल्बिषः।

अनेकजन्मसंसिद्धस्ततोयातिपरांगतिम्॥"[49]

अर्थात् यःपुरुषःविधिम्अनुसृत्यशास्त्रोक्तकर्माणिआचरति, तस्यसर्वाणिपापानिविनश्यति। एवं बहुषुजन्मसुक्रमेणशुद्धःभूत्वामुक्तिरूपांपरमांगतिंप्राप्नोति इति भावार्थः।

"कुर्वते कर्म भोगाय कर्म कर्तुं च भुज्यते।

नद्यांकीटाइवावर्तादावर्तान्तरमाशुते।

व्रजन्तोजन्मनो जन्म लभन्तेनैवनिर्वृतिम्॥"[50]

एवं बहु जन्मनःपरं-

"सत्कर्मपरिपाकात्तेकरुणानिधिनोद्धृताः।

प्राप्य तीरतरुच्छायांविश्राम्यन्तियथासुखम्॥"[51]

तेकीटाःसत्कर्मपरिपाकात्करुणानिधिनापरमकृपालुनाकेनचित्पुरुषविशेषेणउद्धृताःरक्षिताःजलप्रवाहतीरितरुच्छायां प्राप्य तत्र यथा विश्राम्यति, तथैवजीवाःसंसारावर्ते बहु जन्म यापित्वासत्कर्मपरिपाकात्करुणानिधिनापरमकृपालुनागुरुणाउद्धृताःसन्तःरक्षिताःभवन्ति। अतः आत्मनःशुद्ध्यर्थं बहु जन्म आवश्यकम् इति प्रमाणितम्। तस्मात्लक्षणे"अस्मिन्जन्मनिजन्मान्तरेवा" इति उक्तम्। एवम् अधिकारिलक्षणंसामान्यरूपेणप्रदर्शितम्। इदानींतस्यविस्तारः आवश्यकः।

49

50

51

ISSN 2348-8263

एतत्सिद्धंयत् विधिवत् वेदाङ्गसहितंवेदाध्ययनंकर्तव्यं, तत् एकस्मिन्एवजन्मनि अथवा बहुषुजन्मसुभवतु। विधिवत् अध्ययनम्इत्यस्यअर्थःत्रैवर्णिकानां ब्राह्मण-क्षत्रिय-वैश्यानाम्उपनयनसंस्कारःकर्तव्यः। ततःगुरुगृहंगन्तव्यम्। तत्रस्थित्वाब्रह्मचर्यंपालयित्वावेदाङ्गैःसहितंवेदानाम्अध्ययनम्एव विधिवत् अध्ययनम्।वेदान्ततत्त्वज्ञानायवेदानाम्आपाततःअर्थज्ञानम्आवश्यकम्। वेदानाम्अर्थज्ञानेनमनःविशुद्धंभवति। विशुद्धंमनःत्याज्यकर्मणिनियुक्तं न भवति।

द्विविधंत्याज्यं कर्म – काम्यकर्म, निषिद्धकर्मचेति।

*काम्यकर्म*- "फलोद्देश्येनक्रियमाणानिकर्माणिकाम्यानि"[52]। यत्किञ्चित्फलम्आकाङ्क्ष्ययत् कर्म करोति तत् काम्यं कर्म। यथा स्वर्गप्राप्त्यर्थंक्रियमाणानिज्योतिष्टोमयज्ञादीनि। मरणादनन्तरंस्वर्गप्राप्तिः यथा भवतितदर्थंज्योतिष्टोमयागःअनुष्ठितःभवति। अतः स्वर्गरूपफलप्राप्तयेज्योतिष्टोमयागःक्रियते। अतः ज्योतिष्टोमयागःकाम्यकर्म। काम्यकर्मणःफलम्अनित्यम्, अर्थात् सर्वदा न तिष्ठति। फलभोगात्परं पुनः तत् फलंकोऽपिइच्छतिचेत् तत् कार्यं पुनः कर्तव्यम्।

*निषिद्धकर्म*– निषिद्धानिनरकाद्यनिष्टसाधनानिब्राह्मणहननादीनि। वेदेषुयेषांकर्मणांनिषेधःविद्यतेतानिनिषिद्धकर्माणि। एतानिकर्माणिनरकादिअनिष्टंसाधयन्ति। यथा - "ब्राह्मणो न हन्तव्यः" वेदे एवं निर्देशः अस्ति। अतः कोऽपिवेदस्यनिर्देशम्अश्रुत्वाब्राह्मणहननंकरोतितर्हिसःनिषिद्धं कर्म आचरति। तेनसःपापभागीभवति। तस्यनरकाद्यनिष्टलोकप्राप्तिःभवति। अस्यफलमपिअनित्यम्एव। फलभोगात्अनन्तरम्एवमुक्तिः।

*नित्यकर्म*- "नित्यानिअकरणेप्रत्यवायसाधनानि"। येषांकर्मणाम्आचरणेनमहत्पुण्यं न सम्भवति, परन्तु अननुष्ठानेनपापःभवतितानिकर्माणिनित्यानि। यथा - सन्ध्यावन्दनादीनि। श्रुतौआम्नातं"अहरहःसन्ध्यामुपासीत" इति प्रत्यहंसन्ध्योपासनाकर्तव्या इति श्रुतेःनिर्देशः। यःप्रत्यहंसन्ध्योपासनंकरोति, सःतेनकर्मणालाभवान् न भवति। परन्तु यःआलस्यवशात्सन्ध्योपासनं न करोतिसः पापी भवति। स्मृतौ अपि उक्तम्-

"अकुर्वन्विहितं कर्म निन्दितं च समाचरन्।

52

ISSN 2348-8263

प्रसञ्जन् च इन्द्रियार्थेषुनरःपतनमृच्छति॥"

यःशास्त्रैःविहितंसन्ध्यावन्दनादिकंपरित्यज्यशास्त्रनिषिद्धंब्राह्मणहननादिकम्आचरति, पुनः इन्द्रियभोग्येषुविषयेषुआसक्तःभवतिसःनरकादौपतितःभवति। अतः शास्त्रविहितानांनित्यकर्मणांसन्ध्यावन्दनादीनाम्आचरणंप्रत्यहंकर्तव्यम्।

<u>*नैमित्तिकं कर्म*</u> - "नैमित्तिकानिपुत्रजन्माद्यनुबन्धीनिजातेष्ट्यादीनि"। नैमित्तिकं नाम निमित्तमूलकम्। कस्यचित्निमित्तस्यउपस्थितौशास्त्रोपदेशेनयत् कर्म कर्तव्यंभवति तत् नैमित्तिकं कर्म। यथा जातेष्ट्यादीनियज्ञानि। जातेष्टियागस्यविधायकंवाक्यम्एवम् अस्ति - "वैश्वानरंद्वादशकपालंनिर्वपेत्पुत्रे जाते" इति। यदा पुत्रःभवति तदा द्वादशसुकपालेषुपुरोडाशंस्थापयित्वावैश्वानरदेवायदातव्यम्। पुत्रजातनिमित्तंजातेष्टियागःभवतितस्मात्सःयागःनैमित्तिकं कर्म।

<u>*प्रायश्चित्तं कर्म*</u>- "प्रायश्चित्तानिपापक्षयसाधनानिचान्द्रायणादीनि"। मनुष्याःभ्रमादेवप्रमादंकुर्वन्ति। लोभादीनांवशम्आगत्यपापम्आचरन्ति। विहितकर्मणाम्अननुष्ठानेननिषिद्धकर्मणां च अनुष्ठानेनमनुष्याःपापभाजाःभवन्ति। परं च कृतस्यपापस्यकृतेअनुशोचनंकुर्वन्ति। अस्मिन्नेवजन्मनितस्मात्पापात्मुक्तिंप्राप्तुंयतन्ते। एतादृशानांमनुष्याणांकृतेएवशास्त्रेप्रायश्चित्तकर्मणःविधानंविद्यते। प्रायश्चित्तशब्दार्थः"प्रायः तुष्टंचित्तंयत्र तत् प्रायश्चित्तम्" इति। प्रायशब्दार्थःप्रकृष्टम्अयः अर्थात् लौहवत्कठोरःतपः। अर्थात् यस्मिन्व्रतानुष्ठानेकठोरेण तपसा चित्तंतुष्टंभवति तत् प्रायश्चित्तम्। येनपापानांक्षयःभवति। चान्द्रायणम्एकंप्रायश्चित्तम्। चान्द्रायणविषये

" एकैकंह्रासयेत्पिण्डंकृष्णेशुक्ले च वर्धयेत्।

उपस्पृशन्त्रिषवणमेतच्चान्द्रायणंस्मृतम्॥"[53]

एताषांनित्यनैमित्तिकप्रायश्चित्तानांबुद्धिशुद्धिःपरम् अर्थात् मुख्यंप्रयोजनम्। एतेषांकर्मणामनुष्ठानेनबुद्धेःशुद्धिः निर्मलता भवति। तस्मात्एवएतेषाम्आचरणंकर्तव्यम्।

53

ISSN 2348-8263

एवआमुष्मिकाणांस्वर्गसुखानाम्अमृतादिविषयभोगानाम् अपि अनित्यत्वम्। तत्रप्रमाणम्- "तद्यथेहकर्मजितोलोकःक्षीयते एवम् एवअमुत्रपुण्यजितोलोकःक्षीयते"[61, xviii] इत्यादयःश्रुतयः। अर्थात् कर्मणाजीतःपृथिवीलोकःभोगेनक्षीयतेतथैवपुण्येनजीतःलोकःस्वर्गलोकः अपि भोगेनक्षीयते। "क्षीणेपुण्येमर्त्यलोकंविशन्ति" इति गीतावचनम् अपि प्रमाणम्। अतः लौकिकंसुखं तथा स्वर्गसुखम्उभयम् अपि अनित्यम्। यतोहितेअनित्याः अतः तेभ्यःनितरांविरतिःअत्यन्ततया विमुखता एवइहामुत्रफलभोगविरागः। तथा हिउक्तम्-

"तद्वैराग्यं जुगुप्सा या दर्शनश्रवणादिभिः।

देहादिब्रह्मपर्यन्तेह्यनित्येभोगवस्तुनि॥"[62]

<u>शमादिषट्कसम्पत्तिः</u>- अधिकारी द्वितीयसाधनसम्पन्नः यदा भवति तदा तृतीयसाधनस्यमार्गःउन्मुक्तःभवति। तृतीयसाधनंभवतिशम-दम-उपरति-तितिक्षा-समाधान-श्रद्धानांप्राप्तिः।

<u>शमः</u>- "शमस्तावत्श्रवणादिव्यतिरिक्तविषयेभ्यःमनसःनिग्रहः" इति उक्तंवेदान्तसारे। वस्तुतः मनसःनिग्रहःएवशमः। श्रवण-मनन-निदिध्यासनेनएवतत्त्वज्ञानंजायते वेदान्ततत्वस्य येनवृत्तिविशेषेणआत्मविषयकश्रवणादिभिन्नविषयेभ्यःबलात्मनसःनिग्रहःभवतिसःशमः। जीवस्यचित्तम्अतिशयचपलम्। एकस्मिन्विषयेदीर्घकालंयावत् न तिष्ठति। बुभुक्षोःभोजनं प्रति यथा अभिरुचिःभवति तथा एववैराग्ययुक्तस्यपुरुषस्यमनःतत्तवज्ञानेअभिरुचिसम्पन्नंसत् अपि पूर्वसंस्कारवशात्विक्षिप्तंभवति। तस्यांदशायांयेनवृत्तिविशेषेणपार्थिवंसुखम्अनित्यंपरिणामेदुःखजनकम् इति बलपूर्वकंविषयेभ्यःआकर्षतिसःशमः।

"विरज्यविषयव्रातादोषदृष्ट्यामुहुर्मुहुः।

61

62




ISSN 2348-8263

स्वलक्ष्येनियतावस्थामनसःशमउच्यते॥"[63]

मुहुर्मुहुःप्रतिक्षणं, दोषदृष्ट्यादोषदर्शनेन, विषयव्रातात्विषयसमूहात्विरज्यवैराग्यप्राप्त्यामनसःस्वलक्ष्येब्रह्मतत्वज्ञानेनियतावस्थानिश्चलरूपेणअवस्थानंशमःउच्यतेकथितो भवति।

<u>दमः</u>- "दमोबाह्येन्द्रियाणांतद्व्यतिरिक्तविषयेभ्योनिवर्तनम्" इति वेदान्तसारेउक्तम्। बाह्येन्द्रियाणां चक्षु-कर्ण-नासिका-जिह्वा-त्वचांतद्विषयेभ्यःआकर्षणम्। चक्षुषःरूपात्, कर्णस्यशब्दात्, नासिकायाःगन्धात्, जिह्वायाःरसात्, त्वचःस्पर्शात्आकर्षणंयेनवृत्तिवशेषेणक्रियतेसःदमः। वस्तुतः दमः नाम बाह्येन्द्रियाणांनिग्रहः। आदौअन्तरिन्द्रियस्यनिग्रहःकर्तव्यः। ततःबाह्येन्द्रियाणांनिग्रहः। तस्मात्आदौशमस्यनिर्देशःततःदमस्यनिर्देशः। यदि मनःवशीभूतंभवतितर्हिचक्षुषादीनांनिग्रहःसम्भवः। मनसःसङ्कल्पवशात्एवचक्षुषादयःरूपादिषुधाविताःभवन्ति। यदि कोऽपिपुरुषःकस्मिंश्चित्विषयेमनसःनियोगंकरोतितर्हितस्यसम्मुखेसुरूपंतिष्ठतिचेत् अपि न पश्यति, सुगीतंभवतिचेत् अपि न श्रुणोति। अतः मनसःनिग्रहःभवतिचेत्बहिरिन्द्रियाणां स्वतः निग्रहःभवति। परन्तु संस्कारवशात्विक्षिप्तंभवति। तस्मात्यत्नःकर्तव्यः।

"विषयेभ्यःपरावर्त्यस्थापनंस्वस्वगोलके।

उभयेषामिन्द्रियाणां स दमःपरिकीर्तितः॥"[64, xxi]

शमदमवान्पुरुषःएवस्थितप्रज्ञः इति भगवान्श्रीकृष्णःउक्तवान्-

"यदा संहरतेचायंकुर्मोऽङ्गानीवसर्वशः।

इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता॥"[65, xxii]

63

64

65

ISSN 2348-8263

<u>उपरतिः</u>- वेदान्तसारेउपरतेःलक्षणद्वयम्उक्तम्- "निवर्तितानाम्एतेषांतद्व्यतिरिक्तविषयेभ्यःउपरमणम्उपरतिः" अथवा "विहितानांकर्मणांविधिनापरित्यागः"इति।

मनसः तथा बहिरिन्द्रियाणांनिग्रहणेनएवतत्त्वज्ञानस्यमार्गःउन्मुक्तः न भवति। पूर्वतनवासनावशात्तानि पुनः चञ्चलानि... बहिरिन्द्रियाणांतद्व्यतिरिक्तविषयेभ्यः पु... अतः निवर्तितानाम्इन्द्रियाणाम्मनसः तथा पुनःदोषदर्शनेनउपरमणम्निवृत्तिःएवउपरतिः। अथवा शास्त्रविहितानांनित्यनैमित्तिकप्रायश्चित्तानांविधिपूर्वकंपरित्यागःएव...

विवेकचूडामणौउक्तम्- "बाह्यानालम्बनंवृत्तेरेषोपरतिरुत्तमा।"इति।

वृत्तेःमनसःविषयप्रकाशकशक्तेःबाह्यानालम्बनंबाह्यानात्मनवस्त्वाकारेणअपरिणतभवनम्एवउत्तमाउपरतिः।

<u>तितिक्षा</u>-

"तितिक्षाशीतोष्णादिद्वन्द्वसहिष्णुता"इतिउक्तम्। अर्थात् शीतोष्णप्रभृतिविपरीतविषयान् त... ततःउत्पन्नसुखदुःखादीनांसहनम्। सर्वेजीवाःसुखेनआनन्दम्अनुभवन्ति। आनन्देनप्रमादः न भवति। परन्तु दुःखस्यसहनं... शक्नुवन्ति। अतः दुःखकारणात्प्रमादंकुर्वन्तिबहवः। परन्तु यःतितिक्षाम्अभ्यस्यतितस्यसमीपेसुखंदुःखम्उभयम् अपि सम... सःसुखेनअत्यधिकम्आनन्दम् न अनुभवति, दुःखेन अपि दुःखितः न भवति। ... सःअप्रमादःधैर्यवान्भुत्वासाधनातःअविचलितः न भवति। विवेकचूडामणौउक्तम्-

"सहनंसर्वदुःखानामप्रतीकारपूर्वकम्।

चिन्ताविलापरहितं सा तितिक्षानिगद्यते॥"

सर्वदुःखानांसर्वविधदुःखानांचिन्ताविलापरहितंचिन्तांविलापं च त्यक्त्वाअप्रतीकारपूर्वकम्प्रतीकारं कृत्वासहनंस्वीकारःएवतितिक्षानिगद्यतेउच्यतेइत्यर्थः।


ISSN 2348-8263

<u>समाधानम्</u>- "निगृहीतस्यमनसःश्रवणादौतदनुगुणविषये च समाधिःसमाधानम्।" अर्थात् विषयेभ्यःप्रत्याहितस्यचित्तस्यआत्मनःविषये श्रवण-मनन-निदिध्यासने तथा तस्यअनुगुणविषयेगुरुशुश्रूषादौअवस्थानम्एवसमाधानम्। अस्याम्दशायाम् एवं किमपि न कर्तव्यंयेनआत्मविषयस्मृतिधारायाःविच्छेदोभवति। अात्मविषयकप्रत्ययप्रवाहस्यउत्पादनम्एवसमाधिः, तदेवसमाधानम्। विवेकचूडामणौउक्तम्-

"सम्यगास्थापनंबुद्धेःशुद्धेब्रह्मणि सर्वथा।

तत्समाधानमित्युक्तं न तुचित्तस्यलालनम्॥"

<u>श्रद्धा</u>- केवलेनश्रवणादिनातत्त्वसाक्षात्कारः न भवति तदपि श्रद्धापूर्वकंकर्तव्यम्एव। श्रद्धा नाम का इति चेत्उच्यते- "गुरूपदिष्टवेदान्तवाक्येषुविश्वासः श्रद्धा"इति। गुरुवचनेषु तथा गुरूपदिष्टशास्त्रवचनेषुदृढतरनिश्चयःएव श्रद्धा। आत्मतत्त्वजिज्ञासोः श्रद्धा एवमेरुदण्डः। श्रद्धा न तिष्ठतिचेत्शतशःउपदिष्टः अपि अर्थस्यअवधारणं न भविष्यति। अतः आत्मजिज्ञासोःश्रद्धायाःअवलम्बनम्अनिवार्यम्। विवेकचूडामणौउक्तम्-

"शास्त्रस्यगुरुवाक्यस्यसत्यबुद्ध्यवधारणम्।

सा श्रद्धा कथितासद्भिर्ययावस्तूपलभ्यते॥"

<u>मुमुक्षुत्वम्</u>- मुमुक्षुत्वस्यअर्थःमोक्षे इच्छा। आत्मज्ञानप्राप्तयेएतत्एवप्रधानंसाधनम्। यदि पुरुषस्यमोक्षप्राप्तये इच्छा न भवतितर्हिमोक्षोपायस्यअन्वेषणं न करोति। तस्मात्आत्मदर्शनं अपि न करोति। आत्मदर्शनंमोक्षस्यमार्गः इति वेदान्ततत्त्व-श्रवण-मनन-निदिध्यासनम्आत्मदर्शनेकारणम् इति बोद्धुं न शक्नोति। अतः वेदान्तेतस्यप्रवृत्तिःएव न स्यात्। तेनवेदान्तैकवेद्यस्यआत्मनःज्ञानम् अपि तस्य न भवति। अतः अधिकारिणःमोक्षेच्छाअवश्यंभवितव्या। विवेकचूडामणौशङ्कराचार्येणउक्तम्-

"अहंकारादिदेहान्तान्बन्धानज्ञानकल्पितान्।

 ISSN 2348-8263

# वेदान्तेविदुषामुत्कलंप्रतिअवदानाम्

सुजाताविश्वाल

विशिष्टाचार्यः (अद्वैतवेदान्तः)

श्रीजगन्नाथसंस्कृतविश्वविद्यालयः,श्रीविहारः, पुरी

वेदान्तोनामउपनिषत्प्रमाणम् । तदुपकारीणिशारीरिकसूत्रादीनि वेदस्य अन्त ज्ञानस्येव निरुपणीयत्वेन ज्ञानंब्रह्मैतिसिद्धम् । वेदान्तशास्त्रे पदार्थस्य जड़ चेतनभेदेन दैविध्यमङ्गीकृतमस्तितत्र चेतनपदजन्य वोधविषयः तावत्ब्रह्म । तद् अन्यः सर्वोऽपि जडपदार्थः । मायाया मायाकारणस्य च सर्वस्यापि जगतोजड़पदार्थत्वेनतदतिरिक्तंकिमपि नास्त्यैवेति ध्येयम् इति ।

एवंवेदान्ते सत्यमिथ्याभेदेन पदार्थोद्विविध इत्यपि वक्तुं शक्यते । तत्र सत्यपदार्थो ब्रह्म । तद् व्यतिरिक्तं माया, मायाकार्य च सर्वमेवजगच्च अस्ति मिथ्याभूतं जडात्मकं चेति ।

**अष्टविद्य भाष्यकारः विवेचनम् -**

व्यासविरचितब्रह्मसूत्रश्योपरि अष्टविधाऽचार्यप्रवशः प्रसिद्धप्राप्ता भाष्यकारा मिलन्ति ।

१. श्रीशङ्कराचार्यः - श्रीशङ्करावतारभूतः ।

२. भाष्कराचार्यः- भेदाभेदमतप्रवर्त्तकसर्वदासगुणब्रह्मवादी चायम् ।

